।।श्रीः।।

चौखम्बा सुरभारती ग्रन्थमाला

२६९

# नैषधीयचरितसोपानम्

(दशमसर्गतः त्रयोदशसर्ग यावत्)


लेखकः-

श्री शिवप्रसाद द्विवेदी

वेदान्त विभागाध्यक्ष-श्री हनुमत् संस्कृत महाविद्यालय

हनुमानगढ़ी आयोध्या





चौखम्बा सुरभारती प्रकाशन

वाराणसी

# परीक्षोपयोगी प्रश्नोत्तरात्मक पुस्तकें

## ( संस्कृत भाषा में )

| | | |
|---|---|---|
| १ | अभिधावृत्तिमातृका-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | १२ |
| २ | अरस्तुकाव्यशास्त्र-सोपानम् । आचार्य शिवप्रसाद द्विवेदी | १५ |
| ३ | अलङ्कारशास्त्रस्येतिहासः । परमेश्वरदीन पाण्डेय | १२ |
| ४ | उत्तररामचरितादर्श । डॉ. रमाशंकर मिश्र | २५ |
| ५ | औचित्यविचारचर्चा-मञ्जरी । डॉ. नरेश झा | १२ |
| ६ | कर्पूरमंजरी-दीपिका । गौरीनाथ मिश्र 'भास्कर' | १० |
| ७ | कादम्बरी-कला-प्रकाशः । डॉ. नरेश झा | ३० |
| ८ | कादम्बरी प्रश्नोत्तरी । डॉ. शिवप्रसाद द्विवेदी | ३ |
| ८ | कादम्बरी-सोपानम् । शिवप्रसाद द्विवेदी | ३ |
| ९ | काव्यदीपिका-रहस्यम् । गौरीनाथ मिश्र 'भास्कर' | १५ |
| १० | काव्यप्रकाश-रहस्यम् । श्रीरामजी लाल शर्मा | ३० |
| ११ | काव्यमीमांसा-दीपिका । वेदव्यास शुक्ल ( १-५ अध्याय ) | १५ |
| १२ | काव्यशास्त्रस्येतिहास-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | २० |
| १३ | काव्यादर्श-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | १० |
| १४ | काव्यालङ्कारसूत्रवृत्तेः-आलोकः । ( तृतीयाधिकरण प्रश्नोत्तरी ) । डॉ. नरेश झा | ७ |
| १५ | काशिका-रहस्यम् । १-२ अध्याय । श्रीअशोककुमार गौड़ | १० |
| १६ | किरातार्जुनीय-रहस्यम् । डॉ. कृष्णदेव प्रसाद । १-२ सर्ग, १०-००, ३-६ सर्ग | २५ |
| १७ | कुमारसम्भव-रहस्यम् । श्री रामप्रसाद त्रिपाठी । १-२ सर्ग | १२ |
| १८ | कुवलयानन्दालोकः । डॉ. नरेश झा | २५ |
| १९ | चन्द्रकलानाटिका-रहस्यम् । परमेश्वरदीन पाण्डेय | १५ |
| २० | चन्द्रालोक-रहस्यम् । मानवल्ली तथा बेताल | ३० |
| २१ | चम्पूरामायण सोपान । डॉ. शिवप्रसाद द्विवेदी | १५ |
| २२ | चारुदत्त-रहस्यम् । डॉ. नरेश झा | १० |
| २३ | चित्रमीमांसा-प्रकाशः । डॉ. नरेश झा | १५ |
| २४ | छन्दोमञ्जरी-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | ७ |
| २५ | जातकमाला-दीपिका । आचार्य रामचन्द्र मिश्र | १० |
| २६ | तर्कभाषा-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | १० |
| २७ | तर्कसंग्रह-रहस्यम् । श्रीकीर्त्यानन्द झा | २० |
| २८ | दशकुमारचरित-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | १२ |
| २९ | दशरूपकतत्त्वदर्शन-दीपिका । श्रीमनोजकुमार द्विवेदी | १५ |
| ३० | दशरूपक-रहस्यम् । डॉ. त्रिलोकीनाथ द्विवेदी | १७ |
| ३१ | ध्वनिविरोध्याचार्याणां सिद्धान्ताः । डॉ. शिवप्रसाद द्विवेदी | १५ |
| ३२ | ध्वन्यालोक-प्रकाशिका । श्री राजेन्द्रप्रसाद कोठ्यारी | ३० |
| ३३ | नलचम्पू-रहस्यम् । पं. परमेश्वरदीन पाण्डेय | १५ |
| ३४ | नाट्यशास्त्र-प्रदीप । डॉ. नरेश झा । १-७ अध्याय | २० |

॥श्रीः॥

चौखम्बा सुरभारती ग्रन्थमाला

२६९

# नैषधीयचरितसोपानम्

(दशमसर्गतः त्रयोदशसर्ग यावत्)

लेखकः-

श्री शिवप्रसाद द्विवेदी

वेदान्त विभागाध्यक्ष-श्री हनुमत् संस्कृत महाविद्यालय

हनुमानगढ़ी आयोध्या



चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक
चौखम्बा सुरभारती प्रकाशन
(भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक)
के० ३७/११७, गोपालमन्दिर लेन
पो० बा० नं० ११२९, वाराणसी २२१००१
दूरभाष: ३३३४३१



द्वितीय संस्करण १९९९
मूल्य ३०/-

अन्य प्राप्तिस्थान
चौखम्बा संस्कृत प्रतिष्ठान
३८ यू० ए० जवाहरनगर, बंगलो रोट
पो० बा० नं० २११३
दिल्ली ११०००७
दूरभाष: ३९५६३९१

प्रधान वितरक
चौखम्बा विद्याभवन
चौक (बनारस स्टेट बैंक भवन के पीछे),
पो० बा० नं० १०६९, वारणसी २२१००१
दूरभाष: ३२०४०४

---

मुद्रक:
ए० के० लिथोग्राफर दिल्ली

अक्षर संयोजक:
शिवप्रभा कम्प्यूटर्स, रायगंज अयोध्या

# नैषधीयचरितसोपानम्

## विषयानुक्रमः

### समालोचनात्मकोभागाः- प्रथमः

# प्राक्कथनम्

महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य संस्कृत साहित्याकाशस्य वृहत् त्रयामन्यतमं स्थानमास्ते इति नास्ति तिरोहितं विपश्चिदपश्चिमेभ्यः। महाकाव्यमिदम् अतिमहत्कायमास्ते इत्यपि सुविदितमेव। तदिदम् नैषधमहाकाव्यम् नैकासु परीक्षासु पाठ्यग्रन्थरूपेण निर्धारितमास्ते। अस्य महाकाव्यस्य गौरवमेतादृशं वर्त्तते यत् सर्वे संस्कृताऽनुरागिणो ग्रन्थेस्मिन् स्वयकीयम् स्वकीयानाञ्च प्रवेशम् वाञ्छन्ति।

संम्पूर्णानन्दसंस्कृतमहाविद्यालयस्य शास्त्रिपरीक्षायामस्य महाकाव्यस्यादिमाः पञ्चसर्गाः पाठ्यत्वेन निर्धारिताः सञ्जाताः। आचार्य परीक्षायां साहित्यशास्त्रस्यैव चत्वारो विभागाः कृता अभूवन्। तदाऽप्यस्य काव्यचूडान्तग्रन्थस्य आचार्यस्यान्तिमायां परीक्षायां दशमत सर्गादारभ्य त्रयोदशं सर्ग यावत् चत्वारस्सर्गाः पाठ्यत्वेन निध ारिता अभूवन्। तदिदम् युक्तमेव निर्धारणम्। किञ्च महाकाव्यस्यास्य त्रयोदशः सर्गस्तु अनेकार्थकश्लोकानां दृष्ट्यातीव महत्वपूर्णो वर्त्तते। अस्यैव सर्गस्य प्रायेण समे श्लोकाः अनेकार्थकाः सन्ति। अस्य सर्गस्य तु देवःपतिर्विदुषीत्यादिकस्य श्लोकस्य तु पञ्चार्थानां प्रकाशनं आचार्यो मल्लिनाथः, प्रकाशव्याख्याकारो नारायणश्चापि कृतवन्तौ।

इमे नवीनतया आचार्यकक्षायां पाठ्यत्वेन निर्धारिताः समे चत्त्वारः सर्गाः दमयन्त्याः स्वयम्बरेण सम्बद्धाः सन्ति। अनेकेषां द्वीपानां तत्रत्यानां राज्ञां च वैशिष्ट्यानि एतेषां सर्गाणामध्ययनेन सुज्ञातानि भविष्यन्तीति धिया नूनमिमे सर्गाः सन्ति निर्धारिताः।

नैषधं विद्वदौषधम्, इति सूक्त्यनुसारेण नाल्पज्ञो जनः प्रभवति सुगमतयाप्रवेशकरणेऽस्मिन् महाकाव्ये। शास्त्राणां बहुज्ञत्वमस्य महाकाव्यस्य रसास्वादायानिवार्य भवति। यदि एतादृशी स्थितिः पण्डितानामपि कृते वर्त्तते चेत् परीक्षाब्धिं संतितीर्षूणां छात्राणां का स्थितिर्भविष्यतीति दर्शं-दर्शं चौखम्बासुरभरती प्रकाशनं वाराणस्याः स्वामिभिरहम् असकृदस्य ग्रन्थस्य सोपाननिर्माणाय कथितोऽभूवम्। तस्यैव फलमास्ते भवतां पठतां छात्रसार्थानां हस्ते गच्छत्सोपानमिदम्।

यद्यनेन सोपानेन भवतः छात्रकदम्बकस्य अल्पोऽप्युपकारः सम्पद्यते तदा नूनम् ममाऽयं श्रमः सफलः स्यादिति निवेदयन् विरमति -

विदुषामाश्रवः
शिवप्रसाद द्विवेदी

## मुख्यानां श्लोकानां व्याख्यानात्मको भागो - द्वितीयः

# नैषधीयचरितसोपानम्

## (दशमसर्गतः त्रयोदशसर्ग यावत्)

## आलोचनात्मको भागः

**प्रश्न- १ नैषधीयचरितमहाकाव्यस्य दशमसर्गस्य कथासारं लिखत।**

**उत्तरम्-** कुण्डीनपुराधीशस्य भीमस्य नागर्याम् स्वयम्बरस्यायोजनं संजातम्। दमयन्त्याः स्वयम्बरं श्रुत्वा शस्त्रशास्त्रयोः लब्धनैपुण्याः सौन्दर्येण शक्त्या च सम्पनाः श्रेष्ठकुलोत्पन्नाः अनेके राजकुमाराः स्वस्व स्यन्दनेषूपविश्य कुण्डीनपुरमाजग्मुः। कश्चनाऽपि प्रख्यातकुलोत्पन्नः राजकुमारः तत्र गमनात् नहि विरराम। तेषां गमनस्य सम्मर्देन सर्वे मार्गाः परिपूर्णतां गताः। कुत्राऽपि कश्चनपि अवकाशो नावशिष्यते स्म। प्रतीयते स्म यत् सम्पूर्णैव वसुन्धरा कुण्डीनपुरगमनस्य मार्गतां गता वर्त्तत इति! सम्पूर्णमेव जगत् गन्तुमुत्सुको वर्त्तते कुण्डीनपुरं इति आभाति स्म। तस्यां दमयन्त्याः स्वयम्बरसभायां ते योग्या अपि आजग्मुः अयोग्या अप्याजग्मुः। अयोग्या राजकुमाराः कामयन्तेस्म यत् वयम् दमयन्त्याः बलेनापहरणं करिष्याम इति। केचन तु दमयन्त्याः स्वयम्बरस्य दिदृक्षयाऽपि तत्र जग्मुः। तेषां राजकुमाराणां तैः साकं परिचारका अपि विपुलमात्रायामगुः। तेषां समेषां सम्मर्देन सम्पूर्णो राजमार्गः तेन प्रकारेण परिपूर्णतामगात् येन तत्र तिलपतनस्याप्यवकाशो नादृश्यत। रथ-गजाश्व-सैन्यानां पदाधातैरुत्पतिताभिर्धूलिभिः सम्पूर्ण आकाशो धूसरितो बभूव।

पूर्वपश्चिमाग्नेयदक्षिणानां दिशामधिपतयोऽपि इन्द्राग्नि-यमवरूणाः देवाः दमयन्तीं लब्धुकामाः सन्तःते चत्वार अपि देवाः धृतनलवेषाः तत्र कुण्डीनपुर्याम्

अस्मासु कमप्येकमेव नूनं नलं मत्त्वा दमयन्ती पतिरूपेण वरिष्यतीति धिया आजग्मुः। नलस्य दौत्येन नैजीमसफलतां ज्ञात्वापि ते चत्वारो लोकपालाः औदासिन्यं गता अपि अकृतसंकल्पा नाभूवन्। ते कृत्रिमं नलस्य रूपं स्वीचक्रुरेव, भ्रमन्ती दमयन्तीं तेषु कमप्येकं वरणं कर्तुमर्हतीति समीहया। तथाचोक्तं कविना –

तेभ्यः प्रसन्नः परिभावयस्व, श्रिया विदूरीकृतकामदेवान्।
यस्मिन् समाजे बहुषु भ्रमन्ती भैमी किलास्मासु घटिष्यतेऽसौ''इति।

दमयन्त्याः तत् स्वयम्बरं द्रष्टुं भगवान् विष्णुः अपि तत्र अगात्। भगवता साकं लक्ष्मीसरस्वत्यौ अपि आस्ताम्। द्वादशादित्येषु एक एव सुमेरोः प्रदक्षिणामकार्षीत् अपर एको भगवतो विष्णोः नेत्रतां ययौ अवशिष्टाः दशसंख्याका आदित्याः जनाकीर्णाः दशदिशः अवलोकयामासुः। निशानाथोऽपि तस्य स्वयम्बरस्य दिदृक्षया तत्र भगवतो नेत्रतामगमत्। तत्र समे यक्षाः सिद्धाः किन्नराः महर्षयश्च समुत्कण्ठिताः सन्तः स्यम्बरे तस्मिन् दिदृक्षया आजग्मुः।

तस्याः स्वयम्बरसभायाः आदिकाव्यकर्ता भगवान् बाल्मीकिः प्रसंसामकार्षीत् तथाहि–

बाल्मीकिरश्लाघ्यत तामनेक –शाखामयीं भूरूहराजिभाजा।
क्लेशं विना कण्ठपथेन यस्य, दैवीदिवः प्राग्भुवमागमद्वाक्।।

तथाविधं समागतानां राजकुमाराणां सम्मर्दमवलोक्य, दमयन्त्याः पिता कोऽयमेतेषां समेषां समागतानां राजकुमाराणां परिचयमुपस्थापयितुं क्षमः इति चिन्तया व्याकुलधिया भगवतो विष्णोः स्तुतिमकार्षीत्। तेन प्रसन्नो भगवान् विष्णुः सरस्वतीं स्वेन सहाकाशे विद्यमानाम् प्राह यत् त्वमेवासि समेषामेतेषां वर्णने समर्था, अतएव त्वमेवैतेषां परिचयमुपस्थापय दमयन्त्याः सविधे। तथा च भगवतः सूक्ति–

कुलञ्चशीलञ्च बलञ्च राज्ञां, जानासि नानाभुवनागतानाम्।
एषामतस्त्वं भव वावदूका, मूकायितुं कः समयस्त्वायम्?इति।

भगवतो विष्णोराज्ञामवाप्य स्वकलाप्रदर्शनधिया भगवती सरस्वती तस्यां सभायां बालारूपेणावततार तथाचोक्तमपि महाकविना–

मध्येसभं सावततार बाला, गन्धर्वविद्यामय कण्ठनाला।
त्रयीमयी भूतबली विभङ्ग.ा, साहित्य निर्वर्तित दृक्तरङ्गा।

तत्र बालारूपेणावतीर्णायाः वागधिष्ठातृदेव्याः सरस्वत्या

सौन्दर्यमतीवाकर्षकमासीत्। तस्याः सम्पूर्ण शरीरं शास्त्रमयमासीत्। तथाहि - "आसीदथर्वा त्रिवली त्रिवेदी मूलाद् विनिर्गत्य वितायमाना। नानाभिचारोचितमेचकश्रीः श्रुतिर्यदीयोदररोमरेखा।।इति।

तत्र बालारूपेणोपस्थितां सरस्वतीं विलोक्य महाराजो भीमो दमयन्तीं सभायामाकारयामास।

तदनन्तरम् तस्यां सभायामगात् दमयन्ती सौन्दर्यातिशयशालिनी। तस्याः दमयन्त्याः सौन्दर्यातिशयस्य वर्णनं महाकविः श्रीहर्षः षोडशश्लोकेष्वकार्षीत्। दमयन्त्याःवक्त्रस्य वर्णने महाकविराह-

'स्निग्धत्वमायाजललेपलोप, सयत्नरत्नांशुमृजांशुकाभाम्।
नेपथ्यहीरद्युतिवारिवर्त्ति, स्वच्छांय सूच्छायनिजालिजालाम्।।इति।

महाकविना षोडशश्लोकेषु वर्णितायाः सौन्दर्यपराकाष्ठां गतायाः दमयन्त्याः अद्भुतं सौन्दर्यं विलोक्य समे तत्र समुपस्थिताः राजकुमारास्तां पत्नीत्वेन कामयामासुः। ते समे रोमाञ्चिताः, विस्मिताः सानुरागाश्च सञ्जाताः। ते नानाविधाः चेष्टाः अकार्षुः। दमयन्त्याः तदद्भुतं सौन्दर्य विलोक्य साश्चर्यं ते प्राहुः-

'रसस्य श्रृंङ्गार इति श्रुतस्य, क्वनाम जागर्त्ति महानुदन्वान्।
कस्मादुस्थादियमन्यथा श्रीः लावण्यवैदग्ध्यनिधिः पयोधेः।।इति।

तस्या अद्भुतमाश्चर्यकरञ्च सौन्दर्यसागरं दर्शं दर्शं समे राजानस्तत्र विस्मता आसन्। तैः निश्चायितं यन्नूनमस्याः निर्माणं ब्रह्मणा न कृतम्। लोकावलोकनेनायमर्थः प्रतीयते यत् ब्रह्मा तु विषमामेव सृष्टिं करोति। कुशग्रहण कर्ता सः एतादृश्याः मृद्व्याः दमयन्त्याः रचनां कर्तु कथं प्रभवेत्। जस्य करस्पर्शेणापीयं म्लानतामेष्यति। अतएव इयं अनङ्गस्य कामदेवस्यैव निर्मितिर्भवितुमर्हति। तथा चानुभूतं तैः-

नमः करेभ्योऽस्तुविधेर्नवाऽस्तु,स्पृष्टं धियाप्यस्य न किं पुनस्तैः।
स्पर्शादिदं स्याल्लुलितं हि शिल्पं, मनोभुवोऽनङ्ग.तयाऽनुरूपम्।।

इत्थम् दमयन्त्याः सौन्दर्येणाभिभूतमानसा राजमण्डल्यचिन्तयत् यदियम् विश्वस्मिन् विश्वे अद्वितीया सुन्दरी वर्त्तते। इन्द्रः दमयन्त्याः सौन्दर्यं। दृष्ट्वा निर्धारयामास यत् अस्याः दमयन्त्याः समक्षमप्सरसां सौन्दर्यमकिञ्चित्करमास्ते। दमयन्त्याः प्रशंसायां राजमण्डल्याः तादृशः प्रशंसात्मको हर्षनादो व्यजृम्भत येन किमप्यन्यत् नाश्रृयत। अस्य दशमस्य सर्गास्य संग्रहार्थरूपेण निम्नांकितं श्लोकं

पपाठ कवी रामकृष्णः

**आजग्मुर्महति स्वयम्बरमहे नन्दन्नले नायकाः**
**चत्वारो हरितां हरिप्रभृतयः कृत्वा नलस्याकृतिम्।**
**वाग्देव्यां नृपवृन्दवर्णनविधौ बद्धोद्यमायां पुरो**
**मध्ये राजकमाजुहाव तनयां भीमो मही वासवः।।इति।**

**प्रश्न २- नैषधीयचरितमहाकाव्यस्यैकादशस्य सर्गस्य कथायाः सारांशम् स्वकीयेन संस्कृतेन लिखत।**

**उत्तरम्-** अद्वितीयसुन्दरी दमयन्ती देवैर्नागैः राजभिश्च काम्यमाना संजायमाने स्वयम्बरसभायामानन्दकोलाहले, मध्ये सभमाजगाम, पतिं वरीतुकामा दमयन्ती। तस्याः मुखचन्द्रः प्रसन्नतया परिपूर्ण आसीत्। सा मनसा चकांक्षे पतिरूपेण लोकऽद्वितीयसुन्दरम् शास्त्रशस्त्रविद्ययोः पारदृश्वानं पुण्यकीर्तिं निषधाधिपं राजानं नलम्। राजराजिः तथाविधमनोज्ञां दमयन्तीमवलोक्य प्रसन्नमानसा बभूव। तेषामक्षिषु दमयन्तीविषयकोऽनुरागः स्पष्टो बभूव। विस्मृतसकलसंसारा राजमण्डली सर्वतोभावेन दमयन्त्याः अङ्गानामवलोकनमकार्षीत् तथाहि-

**तन्निर्मलावयवभीतिषु तद्विभूषा, रत्नेषु च प्रतिफलन्निजदेहदम्भात्।**
**दृष्ट्यापरं न हृदयेन न केवलं तैः, सर्वात्मनैव सुतनौ युवभिर्ममज्जे।**

तदात्वे तां स्वयम्बरसभां द्रष्टुं स्वैः स्वैः विमानैः कुण्डिनपुरस्याकाशमध्ये देवा आजग्मुः। तेषां विमानैः तत्रत्याकाश अपरं स्वर्गलोकमिव शोभितो बभूव। राज्ञां चमरवायुभिः पटवाससुगन्धिभिश्च तेषां समागतानां देवानां समर्चा इव संजाता। उन्नतेषु सौधेषु ध्वजपताकाः शोभन्ते स्म।

एतदनन्तरं भगवती सरस्वती स्वयम्बरसभायाः मध्ये दयन्तीमाश्वासयामास यत् सा यथायथं समेषां राज्ञां वर्णनं करिष्यति। तया साऽभिहिता बभूव-

**'अभ्यागमन्मखभुजामिह कोटिरेषा, येषां पृथक्कथनमब्जदशातिपाति।**
**अस्यां वृणीष्व मनसा परिभाव्य कञ्चिद्,यं चित्तवृत्तिरनुधावति तावकीना।।**

सर्वप्रथमं सरस्वती देवानां वर्णनं प्रारब्धं चकार। साऽवादीत् यत् अयं चन्द्रकिरणामृतपायिनां समाजो वर्त्तते। यो निसर्गतः निर्निमेषः सन्नपि त्वामुपलभ्य द्विगुणितनिर्निमेषः संजातो वर्त्तते। त्वां पत्नीमुपलभ्य तेषाममृतपानमपि द्विगुणितं भविष्यति तवाधरामृतपानेन। स्वर्गलोके विद्यमानः याचकानां सर्वसमीहापूरकः कल्पवृक्षोऽपि तव हस्तगतो भविष्यति। तथाविधान् देवानवलोक्यापि दमयन्त्याः मनस्तत्र नहि रमते स्म। सा तु अश्वमुखानां विद्याधराणां यक्षाणां च सम्मुखे

स्थितैव नाऽभूत्। पुनः मञ्जीष्ठरागरञ्जितपादौष्ठीं तां दमयन्ती फणिभृतामधिपं वासुकिमानयामासुः जन्याः। वासुकेः वर्णनं भगवतः शङ्करस्याभूषणरूपेण कुर्वन्ती भगवती सरस्वती प्राह दमयन्तीम्–

**पाणौ फणी भजति कङ्कणभूयमैशे,सोऽयं मनोहरमणीरमणीयमूर्तिः।**
**कोटीर बन्धनधनुगुणयोगपट्ट,व्यापारपारगममुं भज भूतभर्तुः।।**

तथाविधं शतफणं वासुकिं विस्फुरत्कणं चावलोक्य दमयन्ती भयभीता कम्पिता च बभूव। परन्तु तस्याः तामवस्थां सात्त्विकविकारजन्यां मत्त्वा नागराजः स्वभृत्यानां नर्तनं स्थगितं चकार। तदनन्तरं शिविकावाहकाः तां दमयन्तीमन्येषां राज्ञां समक्षं निन्युः।

तत्र सर्वप्रथमं सरस्वती पुष्करद्वीपाधिपतेः सवनराजस्य वर्णनं कृतवती। सा कथितवती यत् सवनराजं पतिरूपेण कृत्वा त्वम् तेन साकं स्वादूदके जलनिधौ जलविहारकेलिमारभस्व। पुष्करद्वीपे तस्मिन् हिमवत् छायावतः वटस्याधस्तात् साक्षाद्ब्रह्मा निवसति। स च नूनं दमयन्त्या निमार्णकर्तु स्वशिल्पं श्लाघयिष्यति त्वां तत्रावलोक्य। अस्य भुवनराजहंसस्य श्वैत्यमयी कीर्तिः सर्वलोकव्यापिनी वर्त्तते। सरस्वत्या तेन प्रकारेण कृतेऽपि वर्णने सर्वगुणसम्पन्नेऽपि सवनराजे नलत्वस्यात्यान्ताभावं विलोक्य तस्माद् विरता बभूव। तद् दृष्ट्वा शिविकावाहिनः ताम् शाकद्वीपप्रशाशितुः समक्षम् निन्युः। स च राजा नाम्ना हव्यः मनोहरः, कुलीनः गुणज्ञश्चासीत्। सरस्वती प्रावोचत् शाकद्वीपे शाकवृक्षपत्रैः सकला दिशः हरिद्वर्णाः सत्यः शोभन्ते । तस्य द्वीपस्य तरुपत्रजन्यवायोः स्पर्शमात्रेण जायमानस्यानिर्वचनीयानन्दस्य वर्णनं महर्षिः पराशरः विष्णुपुराणे करोतिस्म। शाकद्वीपे एव क्षीरार्णवो वर्त्तते तस्य शोभा प्रेक्षणीया वर्त्तते। तथा चोक्तं महाकविना–

**'क्षीरार्णवस्तवकटाक्षरूचिच्छटानां, अन्वेतु तत्र विकटायितमायताक्षि।**
**वेलावनीवनततिप्रतिबिम्बचुम्बि, किर्मीरितोर्मिचयचारिमचापलाभ्याम्।इति।**

तस्मिन्नेव क्षीरार्णवे शेषशायी भगवान् विष्णुर्विराजतेतराम् शाकाधिपस्य पतिरूपेण वरणं कृत्वा त्वं उदयाचले विहरणस्यावसरं लप्स्यसे। तत्र भ्रमणं कुर्वन्त्यास्तवानन्दपरिपूर्ण प्रसन्नं मुखमवेक्ष्य जनानां भ्रांतिर्भविष्यति यत् कच्चिदयं पूर्णश्चन्द्र उदेति इति।

दमयन्तीं हव्यवाहेऽनुरागरहितां विलोक्य जन्याः ताम् क्रौञ्च द्वीपाधिपस्य द्युतिमतः समक्षं निन्युः। यस्य राज्ञो मण्डले पाण्डुरसन्निवेशं दधिमण्डमयः पूरः

चकास्ति। तत्र भगवती सरस्वती प्राह यदस्य राज्ञो राज्ये कीर्तिकेयस्य बाणैर्विदारितः कौञ्चपर्वतो हंसानां कलरवैः रंजितः तवचरणविहारस्य प्रार्थनां कुरूते। सोऽयं देशः भगवतश्चन्द्रचूडस्य भक्तानां वर्त्तते यत्र जीवः कुशपत्रैः अप्यर्चा कृत्वा लभन्ते सद्गतिम्। न च संसरन्ति पुनः संसारेऽस्मिन्। तत्र गात्वातिविशालानां भगवतः शिवस्य समर्चायै भवनानां निर्माणं त्वं कारयिष्यसि। तत्र सुरतक्रीडाजन्यं श्रमस्वेद-विन्दुं ते शीतलो वायुः गवाक्षमार्गेण प्रविश्य शोषयिष्यति। तथाहि कथितं महाकविना श्रीहर्षेण-

**तस्मिन् मलिम्लुच इव स्मरकेलिजन्म, घर्मोदविन्दुमयमौक्तिमण्डनं ते।**
**जालैर्मिलन् दधिमहोदधिपूरलोल, कल्लोलचामरमरूत्, तरूणिच्छिनत्तु।।इति**

तथाविधं द्युतिमतः परिचयं लब्ध्वाऽपि दमयन्ती तत्रानासक्तमना बभूव। शिविकावाहा अपि ततस्ताम् कुशद्वीपाधिपस्य ज्योतिष्मतः समक्षमानयामासुः अस्य राज्ञो वर्णनं कुर्वन्ती भगवती सरस्वत्याह-यदस्य राज्ञो द्वीपे अत्युन्नतानां कुशानां तीक्ष्णाग्रैः विद्धैः वारिवाहैः सर्वदा सिच्यमानाः कुशाः आकाशं चुम्बन्ति। तथाहि-

**वातोर्मिलोलनचलद् दलमण्डलाग्र, भिन्नाभ्रमण्डलगलज्जलजातसेकः।**
**स्तम्बः कुशस्य भवितामम्बरचुम्बिचूडः, चित्राय तत्र तव नेत्रनिपीयमानः।।इति।**

इमं ज्योतिष्मन्तं राजानं पतिरूपेण वृत्वा त्वं तत्र कुशद्वीपे विद्यमानेषु सप्तसु पर्वतेषु अन्यतमस्य मन्दराचलस्य कन्दरासु कामक्रीडारम्भणस्यावसरं लप्स्यसे।

पुनस्तत्राप्यन्यमनस्कां दमयन्तीमवलोक्य शिविकाबाहाः तां शाल्मलिद्वीपाधिपस्य वपुष्मतः समक्षमानयामासुः। तस्य राज्ञः परिचयमुपस्थापयन्ती सरस्वत्याह यदस्य राज्ञो द्वीपे सुरोदसमुद्रो वर्त्तते। भगवताऽगस्त्येन लवणसागरे आचमितेऽपि भीतिं नहि जगाम। तत्र त्वं नित्यं पतिसौभाग्यं लप्स्यसे। तत्र त्वं द्रोणाचले पतिवशीकरणौषधिं लब्ध्वा चस्वाधीनपतिका भविष्यसि। तत्र मारूतचारूकीर्णैः तद्द्वीपलक्ष्मपृथुशाल्मलितूलजालैः मृदुनि क्षोणितले लीलाविहारसमये ते चरणार्पणनियोज्यानि भविष्यन्ति।

पुनस्तयाप्यौदासीन्येन युक्तां दमयन्तीमवलोक्य शिविकावाहास्ताम् कश्मीराधिपस्य समक्षमानयामासुः तत्राप्यनासक्तमानसीं दमयन्ती ते लक्षद्वीपाधिपस्य मेधातिथेः समक्षमानयामासुः। तस्य विषये सरस्वत्याह यत् एनं पतिं कृत्वा त्वं तत्र दोलाक्रीडायामनुरागवती भवित्री। तत्र तवाधरामृतपानं कृत्वाऽयं

राजा तत्रत्यस्य इक्षुरसौदसागरस्योदकेऽभिलाषी नो भविष्यति। तत्रत्यैः जनैः भगवान् चन्द्ररूपेणोपास्यते। अतएव जनाः चन्द्रदर्शनं कृत्वैव तत्र भोजनं कुर्वन्ति। तव मुखचन्द्रं विलोक्य तत्रत्याः जनाः चन्द्रदर्शनस्य प्रतीक्षां न करिष्यन्ति। अस्य राज्ञो यशः जगद्व्यापि वर्त्तते अतएवैनं त्वं पतिं कुरु।

मेधातिथावनासक्तान्तःकरणा दमयन्तीं विलोक्य सर्वप्रथमं जम्बूद्वीपस्य विस्तरेण वर्णनं कृत्वा तदनन्तरं अवन्तिनाथस्य यस्य राज्ये भगवान् महाकालो निवसति सर्वदा शिप्रायाः नद्यास्तटे तस्य वर्णनं कुर्वन्ती प्राह यत् अस्य राज्ञः पत्न्यः सपत्नीभोगादिरूपमपराधं दृष्ट्वापि स्व स्वामिनं कदापि निष्ठुरं नहि वदन्ति सर्वदाकामावेगासक्तत्वात्। तथाहि-

**आगः शतं विदधतोऽपि समिद्धकामा, नाधीयते परूषमक्षरमस्य वामाः।**
**चान्द्री न तत्र हरमौलिशयालुरेका, नाध्यायहेतुतिथिकेतुरपैति लेखा।।**

तदनन्तरं समक्षं विद्यमानस्य गौडेन्द्रस्य वर्णनमकार्षीत्। तस्य शौर्य पराक्रमं, आजानुभुजत्वम्, यशस्वितान् च श्रुत्वाऽनासक्तमानसीं दमयन्तीं मथुराधिपस्य समक्षं जन्याः निन्युः। तत्राप्युदासीनां तां काशिनरेशस्य समक्षमानयामासुः जन्याः। सरस्वती काश्याः महत्त्ववर्णनपूर्वकं तस्या अधिपस्य महत्त्वं वर्णयामास किन्तु दमयन्त्याः मनस्तत्रापि नहि रमते स्म। काशिराजस्यैव वर्णनेन साकं अयमेकादशः सर्गः नैषधीयचरितस्य समाप्तिं याति। अस्य सर्गस्य सारांशं वर्णयन् रामकृष्णाविरप्याह -

**एते सन्ति सुरा इतः पुनरिमे दीव्यन्तिविद्याधराः,**
**किञ्चस्फाररुचः पृथक्पृथगितो द्वीपाधिपा आसते।**
**सर्वे योग्यतमा वृणुष्व कमपि स्याद् यत्रवात्वद्रुचिः,**
**वाचा भूरिविलोमिताऽपि विजहौ साचित्तचञ्चन्नला।।**

**प्रश्न ३- नैषधीयचरितमहाकाव्यस्य द्वादशतमस्य सर्गस्य कथासारांशं लिखत, स्वकीयेन संस्कृतेन।**

**उत्तरम्**-अस्य द्वादशसर्गस्यारम्भो नैषधीयचरितमहाकाव्यस्य नवीनानागतानां राज्ञां वर्णनेन साकं भवति। तेषां नवीनतया आगतानां राज्ञां मनस्सु विश्वास आसीद् यद् राजकुमारी अस्मानेव वरिष्यतीति। दमयन्त्याः शिविकामपि जन्याः तत्रैव स्थापयामासुः। तेषां राज्ञां वर्णनमपि प्रारब्धवती भगवती सरस्वती क्रमेण। सर्वप्रथमं सा सरस्वती अयोध्याधिपतेः ऋतुपर्णस्य वर्णने प्राह-

न पीयतां नाम चकोरजिह्वया, कथञ्चिदेतन्मुखचन्द्रचन्द्रिका।

इमां किमाचामयसे न चक्षुषी,चिरं चकोरस्य भवन्मुखस्पृशी। इति।।

इमं स्वपतिं कृत्वा त्वं सरय्वां जलविहारस्यावसरं नूनं लप्स्यसे। अस्यैव राज्ञो वंशजैः समुद्रः खनितः, अस्यैव वंशजः भगीरथः समुद्रं गङ्गाजलेन परिपूर्णं चकार। अस्यैव वंशजो भविष्यति काले यः समुद्रं प्रसभं भंत्स्यते। अतएवास्यैव वंशस्य यशो जगद्व्यापि वर्त्तते। ऋतुपर्णस्य वंशस्य यशोगानं सुतरां कात्स्न्र्येन नहि संभवमस्ति।

अस्य ऋतुपर्णस्य शौर्यं वीर्यं पराक्रमञ्च शत्रुसमूहे प्रख्यातमास्ते अस्य प्रतापसूर्य एव ब्रह्मणो तादृशं दीर्धं दिवसं करोति नतु प्रख्यातः सूर्यः, अस्य प्रतापस्य प्रतिविम्ब एव बाडवाग्निरूपेण समुद्रे निवसति नतु प्रख्याताग्निः अस्य प्रताप सूर्य एव व्योमव्यापि विपक्षराजक यशस्ताराः पराभावुकः इत्यहं शङ्के। अयं प्रत्यर्थिभूतानामनेकेषां राज्ञां रणाङ्गणे विनाशमकार्षीत्। अनेन प्रकारेण ऋतुपर्णस्य विशदं वर्णनं श्रुत्वाऽपि दमयन्त्याः मनः तत्र नहि रमते स्म।

तदनन्तरं सरस्वती पाण्ड्याधिपस्य वर्णने प्रावोचत यत् अस्य राज्ञः कीर्ति भूर्लोकव्यापिनी स्वलोकमपि व्याप्नोतीति। अनेन राज्ञा प्रत्यर्थिभूतानां बहूनां राज्ञां नगरीः विनाशिताः, तेषां भवनेषु साम्प्रतं वन्यजन्तवो निवसन्ति। इममेव राजानं सर्वेऽन्ये राजानो नमन्ति शिरोभिः। किमधिकम्-

'एतद्दन्ति बलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवम्,
सङ्गमाङ्गणसीम्नि जङ्गमगिरिस्तोमभ्रमाधायिभिः।
पृथ्वीन्द्रः पृथुरेत दुग्रसमर प्रेक्षोपनभ्रामर।
श्रेणीमध्यचरः पुनः क्षितिधरक्षेपाय धत्ते धियम्' इति।

किन्तु दमयन्ती तस्मिन् राजनि अनुरक्ता नासीत्। दास्यपि तस्य राज्ञः काकत्वं प्रकटयामास।

तदनन्तरं सरस्वती महेन्द्राधिपस्य परिचयं प्रारम्भयामास। तयाभिहितं यदस्य कलिङ्गराजस्य भयं सर्वत्र शत्रुषु व्याप्तमास्ते। त्वं तु भूतलस्योर्वीशी वर्त्तसे। अतएवास्य राज्ञस्त्वया पतिरूपेण वरणं सर्वथोचितं वर्त्तते किमधिकम्-

एतद्भीतारिनारी गिरिबिलविजहद्वासरा निःसरन्ती,
स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा।
आक्रन्दत् भूरियत्तन्नयनजलमिलच्चन्द्रहंसानुबिम्ब,
प्रत्यासत्तिप्रहृष्यत् तनयविहसितैराश्वसीन्यश्वसीच्च।।

इत्थं भगवती सरस्वती नैकधा तस्य राज्ञः पराक्रमस्य वर्णनं चकार

किन्तु दमयन्त्याः मनो न रमतेस्म तस्मिन् राजनि। सा इङ्गितेनैव सरस्वत्या तस्य राज्ञो वर्णनं स्थगितं चकार। तदनन्तरं काञ्च्या अधिपतेः वर्णनं प्रारब्धवती सरस्वती। अयं राजा धनुर्धारयन् शत्रून् उपदिशतीव यत् नम्र एव मम सविधे भवति; स्तब्धं त्वहं दूरे प्रक्षिपामीति। येन प्रकारेण हंसपंक्तिः मृणालं भुक्त्वा निर्झरे क्रीडति तथैवास्य कीर्तिरपि समराङ्गणे शत्रून् निहत्य तेषां विधवानां करकङ्कणादिकं विनाशयति। अतएवायमति यशस्वी वर्त्तते। युद्धस्यारम्भे अस्य राज्ञो द्वीपाः यदा समराङ्गणे धावन्ति तदा सर्वे शत्रवः भयभीताः सन्तः युद्धभूमेः पलायिताः भवन्ति अथवास्य शरणापन्नाः भवन्ति। किं बहुना:-

हित्वा दैत्यरिपोरूरः स्वभवनं शून्यत्वदोषस्फुटा,
सीदन्मर्कटकीट कृत्रिम सितच्छत्रीभवत्कौस्तुभम्।
उज्झित्वा निजसद्म पद्ममपितद्व्यक्तावनद्धीकृतं,
लूतातन्तुभिरन्तरद्यभुजयोः श्रीरस्य विश्राम्यति ।।

अस्य कीर्तयः सम्पूर्णे जगति लब्धप्रसराः सन्ति। एष राजा प्रत्यर्थिराज्ञां हस्तिनां कुम्भस्थले भृशं बाणप्रहारं करोति स्म। इत्थं काञ्ची नरेशस्य वर्णने व्यापृतां सरस्वतीं दमयन्ती नेत्रप्रान्तैरेव सूचयामासान्यस्य राज्ञो वर्णनं कर्तुम्।

तदनन्तरं सरस्वती नेपालाधिपस्य अष्टसु श्लोकषु वर्णनं कुर्वन्ती तस्य शौर्यातिशयस्य वर्णनं कृतवती। तयाभिहितम्।

यावत्पौलस्त्य वास्तूभवदुभयहरिल्लोमरेखोत्तरीये,
सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्तिः।
यावत् प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रा,
वद्री सन्ध्यापताका रूचिरचित शिखाशोणशोभावुभौ च।।

अनन्तरं सरस्वती राज्ञस्तस्य शरणागतवत्सलत्वं युद्धनिरतत्वं च वर्णयामास। तथाविधं नेपालाधिपं वर्णयन्तीं सरस्वतीमाह दमयन्त्याः दासी यत् सर्वे गुणा अस्मिन्नेव राजनि सङ्कीर्णतया निवसन्त्यहमहमिकयेति वक्तव्यं भवत्या, अस्य राज्ञः सर्वेषां गुणानां पृथक् पृथक् वर्णनमशक्यमिति।

नेपालधिपे दमयन्त्याः अरुचिं वीक्ष्य सरस्वती मलयाधिपस्य वर्णनं प्रारम्भयामास। अयमेवैकमात्रशरणं, अस्य रात्ः शत्रूणों रक्षा भगवती दुर्गा पार्वती वा कर्तुं नहि समर्था भवति। अस्य राज्ञो नगर्याः सविधे विद्यमानत्वात् वैदूर्याचलस्ते क्रीडाशैलो भविष्यति। अयं राजा स्वप्रत्यर्थिनां राज्ञां प्राणापहारं

करोति चरणपतितानां राज्ञामयं रक्षां विद्धाति। अस्या कीर्तिपूरस्तु–

अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेष,
स्याहेः भूर्यः फणसमुचितः काययष्टीनिकायः।
दुग्धाम्भोधेर्मुनि चुलुकन त्रासनाशोभ्युपायः,
कायव्यूहः क्व जगति न जागर्त्यदः कीर्तिपूरः।

अनेकेऽप्यस्य राज्ञः शत्रवः किमप्यपर्कतुं नहि प्रभवन्ति। तदनन्तरं दमयन्त्याः अभिप्रायमभिज्ञाय सखी सरस्वतीमाह यदस्य राज्ञो वर्णनं विहायान्यस्यापि कस्यचन वर्णनं कुरु। तच्छ्रुत्वा भगवती सरस्वती मिथिलाधिपस्य वर्णने व्यापृता बभूव। अयं मिथिलाधिपः शरणागतस्य राज्ञो रक्षकः उद्धतस्य च शत्रोः विनाशको वर्त्तते।

अस्योर्वीरमणस्य पार्वणविधुद्वैराज्यसज्जोयशः,
सर्वाङ्गोज्ज्वलशार्वपर्वतसितश्रीगर्वनिर्वासि यत्
तत् कम्बुप्रतिबिम्बितं किमुशरत् पर्जन्यराजिश्रियः,
पर्यायः किमु? दुग्धसिन्धुपयसां सर्वानुवादः किमु।

समराङ्गणे यदायं राजा स्वनिंस्त्रिसधारया प्रत्यर्थिशत्रूणां शिरांसि विदारयति तदा गजुमक्ताः समराङ्गणे विकीर्णाः भवन्ति। स्ववदान्यता परतन्त्रोऽयं राजा याचकानामभिलषितादप्यधिकं धनं ददाति।

मिथिलाधिपस्य वर्णनानन्तरं सरस्वती कामरूपाधिपस्य वर्णनायां व्यापृता बभूव। अयं राजा सर्वान् स्वप्रत्यर्थिभूतान् नृपान् विनाशयामास। तथाचोक्तं महाकविना–

'क्षीरोदन्वदप प्रमथ्यमथितादेशोऽमरैर्निर्मिते,
स्वाक्रम्यं सृजतस्तदस्य यशसः क्षीरोदसिंहासनम्।।
केषां नाजनि वा जनेन जगतामेतत्कवित्वामृत,
स्रोतः प्रोतपिपासुकर्णकलसीभाजाभिषेकोत्सवः।।

अयं राजा अनेकान् प्रत्यर्थिभूपान मारयामास आजौ तेन तेषां स्त्रियः उरस्ताडनपूर्वकं रोदन्ति किन्तु तस्मिन् राजन्यन्यमनस्कां दमयन्तीमवेक्ष्य भगवती सरस्वती उत्कलाधिपस्य वर्णने व्यापृता बभूव। तयाभिहितं यदयं राजा महायशस्वी, शत्रूणां संहारकः प्रत्यादेशो धनुष्मताम् वदान्यतायाः काष्ठां गतश्च वर्त्तते।' यदास्य शत्रवः अस्य शरणागताः भवन्ति तदायं तेषां रक्षणमपि करोति। तथाहि–

अमुष्योर्वीभर्तुः प्रसृमरचमूसिन्धुरभवैः
अवैमि प्रारब्धे वमथुखश्याय समये।
नकम्पन्तामन्तः प्रतिभटनृपाः? म्लायतु न तद्,
बधूवक्त्राम्भोजं?भवतु न स तेषां कुदिवसः?

तस्मिन् राजनि दमयन्त्या अन्यंमनस्कतामवलोक्य सरस्वती जयन्ताभिधस्य बौद्धराजस्य वर्णनं प्रारम्भयामास। अयं राजा मगधाधिपतिः तव कटाक्षपातस्य कामनां चिरात् करोति। एनं त्वमङ्गीकुरु। अयं राजा महायशस्वी वर्त्तते। अस्य वदान्यता याचकजनकल्पतरुत्वं च प्रख्यातं वर्त्तते। किञ्च-

भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमात्,
एतस्य स्तुमहे महेभदशनस्पर्द्धीनि कैरक्षरैः।
लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशः पारदैः,
अस्यस्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्मितः।। इति।

इत्थं भगवती सरस्वती श्लोकानां विंशत्या मगधेश्वरस्य वर्णनं कृत्वाप्यनुबभूव यत् दमयन्त्याः मनोऽस्मिन् राजनि न रज्यते। सा तु केवलं नलमेव निषधाधिपं कामयते। अनेनैव साकमस्य सर्गस्य समाप्तिरपि भवति।

**प्रश्नः ४ नैषधीयचरितमहाकाव्यस्य त्रयोदशसर्गस्य कथायाः सारांशं स्वकीयेन संस्कृतेन नातिविस्तरेण लिखत ।**

उत्तरम्- अयं त्रयोदशः सर्गः श्लेषात्मकवर्णनस्य दृष्ट्या अतीव महत्त्वपूर्णो वर्त्तते। अस्मिन् सर्गे भगवती सरस्वती कृतकृत्रिमनलरूपाणां चतुर्णां दिगीशनां तथाविधं वर्णनं कृतवती येने ते समे श्लोकाः तेषु तेषु दिगीशेषु नलेऽपिचान्विताः भवन्ति। अत्र प्रयुक्तानि तानि-तानि विशेषणानि श्लेषात्मकानि सन्ति। अतएव दमयन्ती सरस्वत्याः तथाविधां वर्णनां श्रुत्वा निश्चेतुं नहि पार्यते स्म यदेतेषु चतुर्षु कश्चननलोऽपिवास्तविको वर्त्तते- नवा? यतः अत्र भगवती सरस्वती तु तथाविधां वर्णनां करोति या वर्णना दिगीशेषु चतुर्ष्वपि अन्विता भवति नलेऽपि च। अस्य सर्गस्य सारांशसंग्रहं कुर्वता; श्रीकृष्णराम कविनाऽपि लिखितम्-

'पञ्चस्वञ्च नलेषु तन्वि कमपि श्रीवीरसेनोदयं
देवं मंखु परीक्ष्य किं भ्रमयसि व्यर्थं त्वमस्मानिति।
वाचा श्लेषवचः प्रपञ्चफलितामर्त्येशमर्त्येशया,
प्रोक्ता पञ्चनलीं विभाव्यसमभूत् संदेहभूर्भीम भूः।। इति।

अस्मिन् सर्गे यद्यपि षट्पञ्चाशत् संख्याकानि एव पद्यानि सन्ति तथापि विवेचनस्य दृष्टया अयं सर्गः अतीव प्रख्यातो वर्तते। अस्य सर्गस्यादिमौ द्वौ श्लोको उपोदघातरूपौ वर्त्तेते। तृतीयात् श्लोकादारभ्य सप्तमश्लोकपर्यन्तं नलरूपधरस्येन्द्रस्य वर्णनं कृतवती श्लेषेण। तां वर्णनां श्रुत्वा दमयन्ती निश्चेतुमसमर्था बभूव यदियं वर्णनेन्द्रस्य वर्त्ततेऽथवा नलस्य? तथाहि-

'आकर्ण्य तुल्यमखिलां सुदती लगन्तीम्,
आखण्डलेऽपि च नलेऽपि च वाचमेताम्।
रूपं समानमुभयत्रविगाहमाना,
श्रोत्रान्ननिर्णयमवापदसौ न नेत्रात्।।

सरस्वती दमयन्त्या मनोदशामवलोक्याज्ञासीत् यद् नूनमियं दमयन्ती ससन्देहमानसा वर्त्तते। अतएव सा अग्नेर्वर्णनम् अपि श्लेषात्मकं रचयामास। अस्याऽग्नेः यानि विशेषणानि प्रायुंक्त भगवती सरस्वती तानि सर्वाणि अपि नलेऽन्वितानि भवन्ति स्म। तथाहि-

'एषः प्रतापनिधिरूद्गतिमान् सदाऽयम्
किं नाम नार्जितमनेन धनञ्जयेन।
हेम प्रभूतमधिगच्छ शुचेरमुष्मात् ,
नास्त्येव कस्यचन भास्वररूपसम्पत्।।

इत्थं सरस्वती दशमात् श्लोकादारभ्य त्रयोदशं श्लोकं यावदकार्षीत् नलरूपधरस्याग्नेः श्लेषेण वर्णनम्। इदं वर्णनमपि श्रुत्वा दमयन्त्याश्चेतः आश्वस्तो नहि बभूव। तद्द्वैधापन्नमासीत्। कस्येदं वर्णनं क्रियते भगवत्या सरस्वत्या? नलस्याथवा अग्नेः? अतएव-

एतादृशीमथविलोक्य सरस्वती ताम्,
संदेहचित्रमयचित्रितचितवृत्तिम्।
देवस्य सूनुमरविन्दविकासिरश्मेः
रुद्दिश्य दिक्पतिमुदीरयितुं प्रचक्रे।।

सरस्वती भगवती नलरूपधरस्य यमस्यवर्णनं त्रयोदशसर्गस्य षोड्शात् श्लोकादारभ्य एकाविंशतितमं श्लोकं यावत् चकार। दमयन्त्यपि तां वर्णनां श्रुत्वा निश्चितं कर्तुमसमर्था बभूव यदियं वर्णना कस्य वर्त्तते यमस्य नलस्यवेति। तस्याः मनसि महतीयं शङ्काः समजायत यत् कति नलाः अत्र समागताः सन्ति, नलस्त्वेक एव वास्तविको भवितुमर्हति। अन्येषां तु

कृत्रिमत्वमपि निश्चप्रचम्। अतएव एतेषु कः वास्तविको नलो वर्त्तते इति केन साधनेन निश्चीयेत। इत्थं वितर्कव्याकुलां दमयन्तीं वीक्ष्य सरस्वती वरुणस्य नलरूपधरस्य वर्णनं श्लेषेण प्रारब्धवती। सा वरुणस्य वर्णनं द्वविंशतितमात् श्लोकादारभ्य पञ्चविंशतितमं श्लोकं यावदकार्षीत्।

तां वर्णनां श्रुत्वाऽपि दमयन्त्याः भ्रमो व्यपगतो नाभूत् अपितु वर्द्धते स्म एव। सरस्वंत्यपि दमयन्त्याः भावादनभिज्ञा नासीत् सावैति स्म यत् नूनं भैमी अत्रापि संशयिता वर्त्तते। अतएव सा निषधाधिपं नलमुद्दिश्यावोचत्–

'अत्याजिलब्धविजयप्रसरस्त्वया किम्,
विज्ञायते रूचिपदं न महीमहेन्द्रः।
प्रत्यर्थिदानवशताहितचेष्टयाऽसौ,
जीमूतवाहनधियं न करोति कस्य।।

अयम् श्लोको यद्यपि वास्तविकस्य नलस्य वर्णनस्वरूप आसीत् किन्तु अस्य श्लेषात्मकत्वात् अस्मिन् प्रयुक्तानि सर्वाणि विशेषणानि इन्द्रेण अन्वितान्यभूवन्। अतएव वास्तविकस्य वर्णनमपि दमयन्त्याः शङ्कानिवर्तकं नहि बभूव। इत्थम् चतुर्ष्वपि श्लोकेषु वर्णनं कृतम् दमयन्त्या संदेहवर्द्धकमेव संजातम्। सरस्वत्या कृतं चतुस्त्रिंशत्तमे श्लोके वर्णनं तु पञ्चस्वपि श्लेषमहिम्ना इन्द्राग्नियमवरुणनलेष्वन्वितं बभूव इति क्वापि नहि शर्मालभत भैमी। इत्थमयं सपूर्ण एव सर्गः श्लेषात्मको वर्त्तते। येन दमयन्ती एतेषु पञ्चसु नलेषु को वास्तविको नलः इति निश्चेतुं नहि प्राभवत्।।

**प्रश्नः ५– नैषधीयचरितमहाकाव्यस्य दशमं सर्गमाश्रित्य निम्नांकितेषु कस्यचनैकस्य वर्णनं कुरूत।**

**(१) सरस्वत्याः (२) भैम्याः**

**उत्तरम्– (१)–सरस्वत्याः वर्णनम्ः–** दमयन्त्याः स्वयम्बरसमये नैके देवाः, नागाः नृदेवाश्च सभामाजग्मुः। तेषां सभागतानाम् परिचचारकसहितानां राज्ञां महान्तं सम्मर्दमवलोक्य कुण्डिनपुराधीशो भीमः अतीव चिन्तितो बभूव, यत् केन प्रकारेणैतेषां परिचयः समुपस्थापितो भवेत्। सर्वेषां समागतानां वास्तविकस्य परिचयस्य समुपस्थापनं कस्मै चनापि मनुष्याय शक्यं नास्ति। इति मनसि मत्त्वा व्याकुलान्तःकरणो राजा भगवन्तं विष्णुमस्तौषीत्। भगवान् विष्णुरपि तत्र दमयन्त्याः स्वयम्बरं द्रष्टुं श्रिया सरस्वत्या च साकम् तत्रत्ये आकाशे समा आसीत् । प्रपन्नं भीमराजानं विलोक्य भगवान् विष्णुः

स्वसविधे विद्यमानां सरस्वतीमवोचत् यदयं तव मौनावलम्बनस्योचितो कालो नास्ति त्वमेव एतेषां समेषामत्र समागतानां राज्ञां परिचयं कारय।

भगवत आदेशमवाप्य सरस्वत्यपि तत्र मध्ये सभं बालारूपेणावतीर्य तस्थौ दमयन्त्याः दक्षिणे पार्श्वे। तदात्वे सरस्वत्याः रमणीयतातीव कमनीया आसीत्। तथा चोक्तम् महाकविना श्रीहर्षेण-

'मध्ये सभं सावततार बाला गन्धर्वविद्याधरकण्ठनाला।
त्रयीमयीभूतवली विभङ्गा साहित्यनिर्वर्तितदृक्तरङ्गा।। 'इति।

तस्याः सरस्वत्याः त्रिबल्येव त्रिवेदी आसीत्। तस्या उदररोमरेखाराजिरेव अथर्ववेदश्रुतिपंक्तयः आसन्। तस्याः चरितं शिक्षाशास्त्रस्वरूपमासीत्। तस्यालङ्कारा एव निरूक्तशास्त्ररूपा आसन्। तस्याः भुजद्वयमेव नानाप्रकारकं छन्दोजातमास्ते। सरस्वत्याः नानामणिमण्डिता काञ्च्यास्ति व्याकरणशास्त्रम्। तस्याः हारः एव ज्योतिश्शास्त्रस्वरूपो बभूव। तस्याः ओष्ठावेव पूर्वोत्तरपक्षस्वरूपौ बभूवतुः वादिप्रतिवादिनोः। तस्याः मनोज्ञतमं ऊरूयुगलमेव ब्रह्मकाण्डकर्मकाण्डयोर्विषय स्वरूपे पूवौत्तरमीमांसे आस्ताम्। यस्याः रदनद्विमाली न्यायशास्त्रोक्ताः षोड्शपदार्थाः द्विधाकृत्वावस्थिताः बभूवुः। तस्याः रदनानां तर्कस्वरूपतां प्रतिपादयन् महाकविः श्रीहर्षः प्राह-

"तर्कारदा यद्वदनस्य तर्क्याः, वादेऽस्य शक्तिः क्व तयान्यथा तैः।
पत्त्रं क्व दातुं गुणशालिपूगं क्व वादतः खण्डयितुं प्रभुत्वम्?" इति।

तस्याः सपल्लवं पाणियुग्मं कथाख्यायिकाभ्यां सहितं पुराणजातम् संजातम्। तस्याः अलङ्कारजालमेव आकल्पविच्छेदविवर्जितं धर्मशास्त्रसमूहस्वरूपमासीत्। किञ्च-

भ्रुवौ दलाभ्यां प्रणवस्य यस्याः तद्बिन्दुना भालतमालपत्त्रम्।
तदर्धचन्द्रेण विधिर्विपञ्ची, निक्वाणनाकोणधनुः प्रणिन्ये।

अथचः- 'द्विकुण्डलीवृत्तसमाप्तिलिप्याः कराङ्गु.लीकाञ्चनलेखनीनाम्।
कैश्यं मषीणां -स्मितभाः कठिन्याः काये यदीये निरमाय सारैः।।इति।

सरस्वत्याः सम्पूर्णस्य शरीरस्य सर्वशास्त्रमयत्वं किञ्च सर्वसिद्धान्तमयत्वं प्रतिपादयन् महाकविराह-

'या सोमसिद्धान्तमयाननेव, शून्यात्मतावादमयोदरेव।
विज्ञानसामस्त्यमयान्तरेव, साकारतासिद्धिमयाखिलेव।। इति।

इत्थंभूतशरीरा सरस्वती सभायाः मध्ये समागत्य प्राह राजानं भीमं य

अहम् सर्वविद्याधिष्ठात्रीदेवी साक्षात् सरस्वत्येव एतेषां अस्यां स्वयम्बरसभायां समागतानां राज्ञां गोत्रादिकानां वर्णनं करिष्यामि इति; भवता अत्र चिन्ता नहि करणीया। अहमत्र भगवता विष्णोराज्ञया कार्यमिदं सम्पादयितुं समागताऽस्मि। राजा भीमोऽपि शकुनस्वराद्यैः आप्तां तां प्रतीत्य तस्याः सरस्वत्याः पूजामकार्षीत्। तथाहि-

तत्कालवेधैः शकुनस्वराद्यैः, आप्तामवाप्तां नृपतिः प्रतीत्य।
तां लोकपालैकधुरीण एष तस्यै सपर्यामुचितां दिदेश।

**(२) दमयन्त्याः वर्णनम्ः-** सकललोकरमणीलोकललाभूतां अद्वितीय सुन्दरीं, स्वात्मजां दमयन्तीं महाराजो भीमः भगवत्याः सरस्वत्याः सभायां

पूरश्चकास्ति दधिमण्डमण्डनन्तरं सुन्दर-सुन्दरतर-सुन्दरतम दर्शनिन

तत्र हंसावली कलकलप्रतिनादवाग्भिः स्कम्भ्लिषु स्फीतम्, स्वाङ्गे.षु च विवरीतुकामः क्रौञ्चः अद्रिः भवदंघ्रिविहारयायी वर.. किञ्च-

कुशपत्रैरपि भगवन्तं शिवं समर्च्य जनः तस्य कृपापात्रतां गतः सन् जन्मजरामरण... रहितः सन् अपुनर्भवत्वमाप्नोति। तत्र गत्वा त्वम् भगवतः शङ्करस्य समर्चाया अवसरं लब्ध्वा वालशशिमौलिसमलंकृतस्य भगवतः शङ्करस्य प्रसन्नतायै त्वम् स्वर्णमन्दिराणां निर्माणं करिष्यसीति ते महते सौभाग्यायापुनर्भवत्वाय च भविष्यति। तस्मिन् द्वीपे दधिमहोदधिपूरलोल कल्लोलचामरमरुत् मलीम्लुच इव गवाक्षमार्गेण प्रविश्य ते स्मरकेलिजन्मस्वेदविन्दुमयं मौतिकमण्डनं चोरयिष्यति। एतादृशस्य अस्य क्रौञ्चद्वीपाधिपस्य यशो हंसो दिगन्तान् यातुमभ्यासं रचयति। यद्यपि राजनि तस्मिन् अनेके गुणाः आसन् अथापि दमयन्ती तस्मिन् निष्ठां नावाप।

**(ग) शाल्मलद्वीपाधिपतेः वपुष्मतो वर्णनम् :-** यदा शिविकावाहाः शाल्मद्वीपाधिपतेः वपुष्मतः समक्षं दमयन्त्याः शिविकामानयामासुः तदा सरस्वती तस्य राज्ञः परिचयमुपस्थापयन्ती प्राह यदस्य राज्ये सुरोदसागरो वर्त्तते, अस्य गुणेषु त्वमनुरक्ता भव। भगवता अगस्त्यमुनिना क्षीरसागरे पीते सति अन्ये यद्यपि समे सागराः क्षीरोद्दध्युद् इक्षूदादिकाः भयभीता अभूवन्-क्रुद्धःसन्नयं मुनिः अस्मानपि जातु कुक्षिस्थान् नहि कुर्यादिति भिया, किन्तु तदापि सुरोदसागरो निर्भय एवासीत्। ब्राह्मणोऽयं महामुनिर्मांतु स्प्रक्ष्यति एव नहि का कथा कुक्षिस्थकरणस्येति मनसि आकलय्य। एनं राजानं स्वपतिं विधाय निजालिगणैः साकं मधुराः मधुपानकेलीः विधेहि। किञ्च-

मुखान्यवलोकयति स्मासकृत्। तद् दृष्ट्वा राजानः कामयन्ते स्म यद् वयम् अस्याः सखीजनानां मुखमण्डलमेव स्याम स्वलंकृतकृत्यतायै इति। स्मितेच्छुदन्तच्छदकाय किञ्चिद्दिगम्बरीभूतरदांशुवृन्दैः, आनन्दितोर्वीन्द्रमुखारविन्दैः कौमुदीनाम् हृदि मुदं नुदति स्म सा। किञ्च राजराजिरवलोकयामास-

'प्रत्यङ्गभूषाच्छमणिच्छलेन, यल्लग्नतन्निश्चितलोकनेत्राम्।
हारग्रजाग्रद्गरूडाश्मरश्मि, पीनाभनाभीकुहरान्धकाराम्।।

सभायामागतायाः दमयन्त्याः मुखं मन्दस्मितेन विकसितमासीत्। तद्वीजयन्ती स्म च सख्यःचमरवायुना। वन्दीगानकर्त्र्यः तस्याः दमयन्त्याः गुणानां गानं कुर्वन्त्यः सत्यः तस्याः गुणानां कात्स्न्र्येन [illegible]थमेवं नानाप्रकारकं छन्दोजातमास्ते। कुण्ठितबुद्धयः संजाताः। सा [illegible]व्यास्ति व्याकरणशास्त्रम्। तस्याः हारः एव चन्द्रमण्डलं कुन्तला[illegible]भूव। तस्याः ओष्ठावेव पूर्वोत्तरपक्षस्वरूपौ बभूवतुः तन्त्रार्तवादिनोः। तस्याः मनोज्ञतमं ऊरूयुगलमेव ब्रह्मकाण्डकर्मकाण्डयोर्विषय स्वरूपे पूवौत्तरमीमांसे आस्ताम्। यस्याः रदनद्विमाली न्यायशास्त्रोक्ताः षोड्शपदार्थाः द्विधाकृत्वावस्थिताः बभूवुः। तस्याः रदनानां तर्कस्वरूपतां प्रतिपादयन् महाकविः श्रीहर्षः प्राह-

"तर्कारिदा यद्वदनस्य तर्क्याः, वादेऽस्य शक्तिः क्व तयान्यथा तैः।
पत्त्रं क्व दातुं गुणशालिपूगं क्व वादतः खण्डयितुं प्रभुत्वम्?" इति।

तस्याः सपल्लवं पाणियुग्मं कथाख्यायिकाभ्यां सहितं पुराणजातम् संजातम्। तस्याः अलङ्कारजालमेव आकल्पविच्छेदविवर्जितं धर्मशास्त्रसमूहस्वरूपमासीत्। किञ्च-

भ्रुवौ दलाभ्यां प्रणवस्य यस्याः तद्विन्दुना भालतमालपत्त्रम्।
तदर्धचन्द्रेण विधिर्विपञ्ची, निक्वाणनाकोणधनुः प्रणिन्ये।

अथचः- 'द्विकुण्डलीवृत्तसमाप्तिलिप्याः कराङ्गुलीकाञ्चनलेखनीनाम्।
कैश्यं मषीणां -स्मितभाः कठिन्याः काये यदीये निरमाय सारैः।।इति।

सरस्वत्याः सम्पूर्णस्य शरीरस्य सर्वशास्त्रमयत्वं किञ्च सर्वसिद्धान्तमयत्वं प्रतिपादयन् महाकविराह-

'या सोमसिद्धान्तमयाननेव, शून्यात्मतावादमयोदरेव।
विज्ञानसामस्त्यमयान्तरेव, साकारतासिद्धिमयाखिलेव।। इति।

इत्थंभूतशरीरा सरस्वती सभायाः मध्ये समागत्य प्राह राजानं भीमं य

विरहपावकमवाप्य स्वनाम कलितान्वयमनुभवतु। इत्थं भगवत्याः सरस्वत्या बहुधा भोगैश्वर्यादिकानां वैपुल्येन वर्णितेऽपि शाकद्वीपाधिपतौ हव्यवाहे दमयन्ती तस्मिन्निष्ठान्नावाप।

**(ख) क्रौञ्चद्वीपाधिपस्य द्युतिमतो वर्णनम्:-** शाकद्वीपाधिपं हव्यवाहमतिक्रम्य शिविकायाः वाहाः जग्मुः क्रौञ्चद्वीपाधिपतेः समक्षम् तस्य वर्णनं प्रारभमाणा सरस्वती प्राह दमयन्तीम्-

द्वीपस्य पश्य दयितं द्युतिमन्तमेतं,
क्रौञ्चस्य चञ्चल दृगञ्चलविभ्रमेण।
यन्मण्डले स किल पाण्डुरसन्निवेशः,
पूरश्चकास्ति दधिमण्डमयः पयोधेः।।

तत्र हंसावली कलकलप्रतिनादवाग्भिः स्कन्देषुवृन्दविवरैः त्वदीयान् गुणान् विवरीतुकामः क्रौञ्चः अद्रिः भवदंघ्रिविहारयायी वर्त्तते। तस्मिन् क्रौञ्चपर्वते कुशपत्रैरपि भगवन्तं शिवं समर्च्य जनः तस्य कृपापात्रतां गतः सन् जन्मजरामरणादिभी रहितः सन् अपुनर्भवत्वमाप्नोति। तत्र गत्वा त्वम् भगवतः शङ्करस्य समर्चाया अवसरं लब्ध्वा वालशशिमौलिसमलंकृतस्य भगवतः शङ्करस्य प्रसन्नतायै त्वम् स्वर्णमन्दिराणां निर्माणं करिष्यसीति ते महते सौभाग्यायापुनर्भवत्वाय च भविष्यति। तस्मिन् द्वीपे दधिमहोदधिपूरलोल कल्लोलचामरमरुत् मलीम्लुच इव गवाक्षमार्गेण प्रविश्य ते स्मरकेलिजन्मस्वेदविन्दुमयं मौतिकमण्डनं चोरयिष्यति। एतादृशस्य अस्य क्रौञ्चद्वीपाधिपस्य यशो हंसो दिगन्तान् यातुमभ्यासं रचयति। यद्यपि राजनि तस्मिन् अनेके गुणाः आसन् अथापि दमयन्ती तस्मिन् निष्ठां नावाप।

**(ग) शाल्मलद्वीपाधिपतेः वपुष्मतो वर्णनम् :-** यदा शिविकावाहाः शाल्मद्वीपाधिपतेः वपुष्मतः समक्षं दमयन्त्याः शिविकामानयामासुः तदा सरस्वती तस्य राज्ञः परिचयमुपस्थापयन्ती प्राह यदस्य राज्ये सुरोदसागरो वर्त्तते, अस्य गुणेषु त्वमनुरक्ता भव। भगवता अगस्त्यमुनिना क्षीरसागरे पीते सति अन्ये यद्यपि समे सागराः क्षीरोद्दध्युद् इक्षूदादिकाः भयभीता अभूवन्-क्रुद्धःसन्नयं मुनिः अस्मानपि जातु कुक्षिस्थान् नहि कुर्यादिति भिया, किन्तु तदापि सुरोदसागरो निर्भय एवासीत्। ब्राह्मणोऽयं महामुनिर्मातु स्प्रक्ष्यति एव नहि का कथा कुक्षिस्थकरणस्येति मनसि आकलय्य। एनं राजानं स्वपतिं विधाय निजालिगणैः साकं मधुराः मधुपानकेलीः विधेहि। किञ्च-

"द्रोणः स तत्र वितरिष्यति भाग्यलभ्य, सौभाग्यकार्मणमयीमुपदां गिरिस्ते।
तद्वीपदीपइव दीप्तिभिरोषधीनां, चूडा मिलज्जलदकज्जल दर्शनीयः।। इति।

**अथचः-**

तद्द्वीप लक्ष्मपृथुशाल्मलितूलजालैः क्षोणितले मृदुनि मारूतचारूकीर्णैः।
लीलाविहारसमये चरणार्पणानि, योग्यानि ते सरस सारसकोष मृद्वि।

तेन प्रकारेण सरस्वत्या वर्णितपि शाल्मलद्वीपाधिपतौ अन्यमनस्का बभूव दमयन्ती।

**(घ)जम्बूद्वीपस्य वर्णनम् :-**

यदा दमयन्ती शाकशाल्मलपुष्करादिद्वीपेभ्यः समागतेषु राजसु अनुरागं नावाप तदा सरस्वती अतीव मधुरेण स्वरेण तामाह यत् यस्मिन् जम्बूद्वीपे सा उत्पना वर्त्तते, सोऽयं द्वीपः सर्वेषां स्वव्यतिरिक्तानां द्वीपानामधिपतिरिवास्ते। अस्य द्वीपस्य समे युवानो राजानः तव पाणिग्रहणस्येच्छयाऽत्र समागताः सन्ति अस्मिन् द्वीपे तरुराजो जम्बू राजतितराम्। अस्य स्थूलोपलान् इव फलानि वीक्ष्याश्चर्यचकिताः सिद्धस्त्रियः स्वपतीन् पृच्छन्ति यत् केन पथा दन्तियूथो तरूम् तस्य जम्बूवृक्षस्य फलरसैः समुत्पन्ना, सा जम्बूः सरित् अस्य द्वीपस्य सीम्नि प्रवहति। तस्याः सम्पूर्णा मृतिका जाम्बूनदस्य नाम्नाभिहिता भवति। अस्मिन् जम्बूद्वीपे अनेके महान्तो वीराः राजानः सन्ति। तेषु राजषु उज्जयिन्याः अधिपतिः, काशिराजः, कश्मीराधिपति प्रभृतयः अनेके प्रख्याताः राजानः सन्ति। तेषाम् अत्र समागतानां वर्णनमहं समुपस्थापयामि, तेषु कश्चित् चेत् तव चेतस अनुरञ्ज कोभवेत्।

**(ङ.) उज्जयिन्या अधिपस्य वर्णनम्:-**

दमयन्त्याः स्वयम्बरे जम्बूद्वीपाधिपतिषु उज्जयिन्या अधिपतिरप्यासीत् तस्य राज्ञो वर्णनमुपस्थापयन्ती भगवती सरस्वती दमयन्तीमाह--

'तत्रानुतीरवनवासितपस्विविप्रा, शिप्रा तवोर्मिभुजया जलकेलिकाले।
आलिङ्गनानि दधती भविता वयस्या, हास्यानुबन्धरमणीयसरोरुहास्या।।

अयमाशयो यत् उज्जयिन्यां प्रवहति शिप्रा नदी, एनं राजानं पतिरूपेण यदा त्वं वरिष्यसि तदा सा नदी तव जलविहारे आनन्ददायिनी भविष्यति। तत्र विकसितानि कमलानि तस्याः मुखानि सन्ति, तस्या ऊर्मयश्च भुजाः। इत्थं भूता सा नदी तवालिङ्गनानि करिष्यति वीचिभुजैः। भगवतोऽर्द्धनारीश्वरस्य पत्नी पर्वती उज्जयिनीमधितिष्ठति। येन प्रकारेण सा भगवती भगवतः अर्द्धाङ्गिनी

बभूव तामेव कला पार्वत्याः वशंवदतां गता सती त्वम् अङ्गीकृत्योज्जयिनीनाथस्यार्द्धाङ्गिनी भविष्यसि। अतएवापि त्वमेनं राजानं वृणु। यद्यपि भगवान् शङ्करः भस्मतां नयति स्म कामम् तथापि सः कामः उज्जयिन्याः नारींणां हृदयेषु नित्यमुपस्थितो भवाति। अतएव कामदाहोऽपि भगवतोऽत्र निष्फलतां गतः। किं बहुना-

'आगः शतं विदधतोऽपि समिद्धकामाः नाधीयते परूषमक्षरमस्य वामाः।
चान्द्री न तत्र हरमौलिशयालुरेका नाध्यायहेतुतिथिकेतुरपौति लेखा।।'

अयमाशयो यत् भगवान् शिवः स्वशिरसि चन्द्रलेखां धारयति तेन तत्रत्याः नार्यः सर्वदा कामुकत्वमनुभवन्ति। एतस्मादेव कारणादस्य राज्ञो नार्यः राज्ञः उज्जयिन्याधिपतेः सपत्नीभोगादिरूपमपराधशतं ज्ञात्वापि कटुभाषणं तस्मै नहि कुर्वन्ति। कषयितमनाऽयं राजा कदाचित् मत्तःपराङ्मुखो माभूदिति भिया भीतिभीताः। इत्थं सरस्वत्या समुपवर्णितेऽप्यवन्तीश्वरे भीमभूमिन्द्रजा तत्र रतिमनवाप्यन्य राज्ञः सम्मुखं जगाम।

(च) काशिराजस्य वर्णनम्ः-

काशिराजस्यैव वर्णनेन साकमयं सर्ग उपसंहृतो भवति। अस्य राज्ञो वर्णनमुपक्रामन्ती भगवती सरस्वती दमयन्तीमाह-अयम् तस्याः काश्या अधिपतिरास्ते यत्र पापिनः अपि समागत्य प्रक्षालितपापपङ्काः सन्तः अत्रैव शरीरं व्ययत्वाद्पुनर्भवत्वं लभन्ते इति महिमा काश्याः वर्त्तते। लोकपितामहस्य ललाटात् समुत्पत्तिसमकालमेव भगवान् रुद्र अरोदीत्, तस्य रोदनस्य प्रमुखं कारणमासीत् यत् ब्रह्मा यस्य लोकस्य सृष्टिं करिष्यति सोऽयं संसारी दुःखमयो भविष्यति। इति धियैव सर्वेषां लोकानां समुद्धाराय काशिरूपिण्याः धर्मनौकाया निर्मितिं चकार यामवलम्ब्य सर्वेऽपि जीवाः समानरूपेण संसारसागरं संतरन्ति। किञ्च-

'वाराणसी निविशते न वसुन्धरायां तत्र स्थितिर्मखभुजां भुवने निवासः।
तत्तीर्थमुक्तवपुषामत एव मुक्तिः स्वर्गात् परः पदमुदेतु मुदे तु कीदृक्।।

अथचः-

सायुज्यमृच्छति भवस्य भवाब्धियादस्तां पत्युरेत्य नगरीनगराजपुत्त्याः।
भूताभिधानपटुमद्यतनीमवाप्य भीमोद्भवे भवति भावमिवास्ति धातुः।।इतिः।

काशिनिवासिजनो यथेच्छं सांसारिकान् भोगान् सर्वानुनुभूयान्ते भगवतोर्द्धनारीश्वरस्य कृपया मुक्तिमवाप्नोति। दमयन्ति त्वं स्वयमेव ज्ञानाधिकासि अतएव काश्यां निवश्य तत्र सुकृतानि कुर्याः। त्वमस्य काशिराजस्य मूर्तिमतीरतिर्भव।

सचाऽयं राजा तव सशरीरः कामो भवतु। अतएवैनं काशिराजमेव त्वं स्वपतिं कुरु। अयं काशिराज अनेकेषां कामशास्त्राणमभिज्ञो वर्त्तते। अतएवायम् तव कुचयुगलं स्वनखक्षतैरलङ्कृतं करोत्विति मदीहा। केवलमयं विलासनिपुण एव नास्ति अपि तु शौर्य वीर्य पराक्रमं चाप्यस्य प्रख्यातम्। अनेन स्ववैरिणाम् शिरांसि क्षुरप्रैः बाणैः कर्तितानि, एतादृशोऽयं राजा तवालिङ्ग.नं कृत्वा तव कामजं सन्तापमपाकरोतु। अस्य राज्ञो वक्षस्थलमतीव कठिनमास्ते यत् तव विरहजेन संतापेन विदीर्णं नाभूत् किञ्च शत्रूणां शस्त्राण्यत्र निपत्यापि व्यर्थानि भवन्ति। यद्यपि सन्त्यस्यां जगत्यामनेके वदान्याः राजानः, किन्तु सत्पात्रासत्पात्रयोः विवेकपुरस्सरं सत्पात्राणं सत्कारं दानराशिसमपर्णस्य विद्यामयमेव जानाति राजा। अस्य राज्ञ अश्वा अतितीव्रगतयः सन्ति, येषां समक्षं इन्द्रस्यापि अश्वो न्यक्कृतो भवति।

अनेन प्रकारेण वर्ण्यमानेऽपि काशिराजे तस्मिन् रतिं नावाप भीमात्मजा दमयन्ती।

**प्रश्न ८- नैषधीयचरितमहाकाव्यस्य द्वादशतमं सर्गमाश्रित्य निम्नांकितानां वर्णनं कुरुत -**

(क) अयोध्याधिपतेः ऋतुपर्णस्य। (ख) काञ्च्या अधिपतेः।
(ग) नेपालनरेशस्य। (ध) मलयाधिपस्य।
(ड.) मिथिलाधिपस्य च।

**उत्तरम्- अयोध्याधिपतेः ऋतुपर्णस्य वर्णनम्ः-**

नैषधीय चरितमहाकाव्यस्य द्वादशसर्गस्य कथा अयोध्याधिपतेः ऋतुपर्णस्य वर्णनात् प्रारब्धा भवति। सरस्वत्यस्य वर्णनमुपक्रामन्ती प्राह यत् सुवर्णकेतकीदला-दप्यधिकस्पृहणीयस्य राज्ञ ऋतुपर्णस्य वरणं त्वं कुरु। अयमवनीपतिः सम्प्रति भवन्मयः सन् नैजीं पवित्रामयोध्याख्यां राजाधानीमपि नहि स्मरति। अस्य मुखचन्द्रचन्द्रिकायाः पानं चकोरो नहि करोतु नाम किन्तु भवन्मुखस्पृशी चक्षुर्णी चकोरः अस्य मुखस्य चन्द्रिकायाः पानं कथं नहि करोति। तव जलक्रीडाकाले जले तरन् सारवसारवोर्मिजः पृषदुत्करः कठोरपीनोच्चकुचद्वयीतटे त्रुटत्तरः हारविभ्रममुत्पादयतु। अस्य पूर्वजैरेव सगरात्मजैः सिन्धुरखानि, अस्य पूर्वजेनैव भगीरथेनायं सिन्धुः गङ्गया समपूरि किञ्चास्य कुलजेनैवसिन्धुः प्रसभं भंत्स्यते। एतद्यशः प्रवाहगाहि वन्दिनां वचनं निमज्जति नतु कार्त्स्न्येन वर्णयितुंप्रभवति प्रत्यर्थिनां च राज्ञां यशांसि क्षीयन्ते। अस्य वीरताऽपि प्रख्याता विद्यते। यदा

समराङ्गणे प्रविशति तदा अस्य हर्षाद् रोमाञ्चो जायते। अस्य नाम मात्रं श्रुत्वा शत्रुवीराणा हस्ताः युद्धकर्मणि नहि प्रवृत्ताः भवन्ति। किमधिकम्-

'तादृग्दीर्ध विरिञ्चिवासरविधौ जानामि यत् कर्तृतां;
शङ्के यत्प्रतिबिम्बमम्बुधिपयः पूरोदरेबाडवः।
व्योमव्यापिविपक्षराजकयशस्तारा: पराभावुकः,
कासामस्य न सप्रतापतपनः पारं गिरां गाहते।। इति।

येन प्रकारेण प्रयागे गङ्गयमुनया सङ्गता भवति तेनैव प्रकारेण समराङ्गणरूपे प्रयागे शत्रोरकीर्तिरूपया यमुनया सङ्गतायां राज्ञोऽस्य कीर्तिरूपायां गङ्गायां तत्र संग्रामाङ्ग.णे मृताः राजानश्च रम्भा परीरम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बराः भवन्ति।

किन्तु सरस्वत्या अत्यादरेण ऋतुपर्णस्य वर्णने कृतेऽपि दमयन्ती तत्र राजनि आदरवती नहि संजाता।

**(ख) काञ्च्या अधिपतेः वर्णनम्ः-**

दमयन्त्याः स्वयम्बरसभायां विवाहार्थित्वेन समागतेषु राजसु काञ्च् या अधिपतिरन्यतमः आसीत्। तस्य वर्णनस्य प्रसङ्गेन सरस्वत्याह यत् राजास्वहस्ते धनुर्धारयन् बाणांश्च दिगन्तेषु प्रक्षिपन् सूचयति यत् .यः नाः सन् ममाज्ञायाः पालनं करिष्यति स एव मम राज्ये स्थातुं शक्नोति,. न तु ममाज्ञाभञ्जकः इति। किञ्च-

"अदः समित् सम्मुखवीरयौवत- त्रुटद्भुजाकम्बुमृणालहारिणी।
द्विषद्गणस्त्रैणदृगम्बुनिझरि, यशो मरालावलिरस्य खेलति।।" इति।

अस्य राज्ञः सिन्दूरद्युतिमुग्धमूर्द्धनि धृतस्कन्धावधिरयामिके, व्योमान्तः स्पृशि सिन्धु? समरारम्भोद्धुरे धावति समस्तबाहुजभुजातेजः सहस्रांशवः प्रदोषतिमरयामिश्रसन्ध्याधियैवास्तं यान्तीति जानीमो वयम्। किञ्च-

हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फुटा,
सीदन्मर्कटकीट कृत्रिमसितच्छत्री भवत्कौस्तुभम्
उज्झित्वा निजसद्म पद्ममपि तद्व्यक्तावनद्धीकृतं,
लूतातन्तुभिरन्तरद्य भुजयोःश्रीरस्य विश्राम्यति।

'समुद्रं पर्वणि स्पृशेत्' इति वचनानुसारेण पर्वदिनेष्वेव समुद्रः पवित्रो भवति, किन्तु अस्य राज्ञः कीर्तितटाकस्तु सर्वदैवपवित्रो भवति। समुद्रस्य वर्णनं शक्यमास्ते किन्त्वस्य कीर्तितटाकस्य वर्णनं त्वशक्यमास्ते। समुद्रं गत्वैव

कश्चन तस्मिन् स्नानं कर्तुं प्रभवति किन्तु सर्वत्रव्याप्तेऽस्य कीर्तितटाके तु सर्वे जना अनायासमेव स्नान्ति। समुद्रादेक एव चन्द्र उदेति किन्त्वस्य कीर्तिसागरात्, विन्दुस्वरूपा अनेके चन्द्रा उदियन्ति। समुद्रे श्यामवर्णो भगवान् विष्णुः शेते किन्तु काञ्च्या अधिपस्य कीर्तिसागरे श्वेतवर्णो यागेश्वरो जलदेवो जागर्ति। अतएव काञ्ची नरेशस्य कर्तिसागरः सागरमतिशेते।

काञ्च्यधिपतेः कीर्तिसमूहं श्रृण्वन् शेषः स्वनेत्राणि नहि निमीलयति रोमरहिते शरीरे सः रोमाञ्चरूपं रोमाङ्कुरं नहि धारयति, सः अलमलमिति कृत्वा शिरः संचालनमपि नहि करोति। किञ्च –

आचूडाग्रममज्जयज्जयपटुर्यच्छल्यकाण्डानयं,
संरम्भे रिपुराजकुञ्जरघटा कुम्भस्थलेषु स्थिरान्।
सा सेवास्य पृथुः प्रसीदसि तया नास्मै कुतस्त्वत् कुच,
स्पर्द्धागर्द्धिषु तेषु तान् धृतवते दण्डान् प्रचण्डानपि।।इति

**(ग) नेपालनरेशस्य वर्णनम् :-**

नैषधीयचरितमहाकाव्यस्य द्वादशे सर्गे भगवती सरस्वती काञ्च्या अधिपतेः वर्णनानन्तरम् नेपालनरेशस्य वर्णनं कुर्वन्त्याह दमयन्तीम् यद् अयं नेपालाधिपतिः महान् वीरो वर्त्तते। सकलजनरञ्जनव्रती अयं नेपालाधीशः रिपूनवाप्यापि अवकीर्णितां न गतः। अतएव प्रजाजनानामनुरञ्जकः शत्रुजनानां विनाशकः सन् त्वया वरणीयो वर्त्तते। अस्य राज्ञस्तेजसा सूर्योऽप्यभिभूतो भवति, यशोऽस्य दुग्धधावल्यमतिशेते। किञ्च-

यावत्पौलस्त्य वास्तूभवदुभयहरिल्लोमरेखोत्तरीये,
सेतुप्रालेयशैलौ चरतिनरपतेः तावदेतस्य कीर्तिः।
यावत्प्राक् प्रत्यगाशा परिवृढनगरारम्भणस्तम्भमुद्रा,
वद्री सन्ध्या पताकारुचिरचितशिखाशोणशोभावुभौ च।।

अस्य राज्ञो वीरता शरणागतवत्सलता, च चरमां काष्ठामवगाहेते। अयं राजा समरमूर्धनि तथाविधया तीव्रगत्या शराणां प्रहारं करोति यत् ते बाणाः शत्रूणां हृदयेषु प्रविशन्ति। कदाऽयं राजा तुणीराद्बाणान्युद्धृत्य शत्रोः हृदये बाण प्रहारमकार्षीत् इति द्रष्टुमक्षमाः मृतानां शत्रूणां हृदयेषु छिद्रमवलोक्य कृत्यमेतत् नेपालधिपस्यैवेति अनुमिन्वन्ति।

**(घ)मलयाधिपस्य वर्णनम् :-**

भगवती सरस्वती दमयन्त्याः स्वयम्बरसभायां समागतानां सर्वेषां राज्ञां

वर्णनस्य प्रसङ्गे.न तत्रोपस्थितस्य मनोज्ञवपुषः कमनीयकान्तस्य मलयाधिपस्य वर्णनमुपक्रामन्ती प्राह दमयन्तीं यद् दर्शनीयोऽयं राजा वर्त्तते। व्याजान्तरेणैवैनमवलोकय, यदि त्रपा त्वां बाधते। अस्य शत्रुगणः तावत्कालपर्यन्तं कुत्रापि गच्छन् शर्म न लभते यावत् कालपर्यन्तमस्य सः शरणापन्नो नहि भवति। अस्मात् राज्ञः पूर्वं जनाः विदूराभिख्यं पर्वतं गत्वा ततो रत्नानि आनयामासुः किन्तु अयं राजा तु य चकेभ्यो तावन्ति रत्नानि प्रयच्छति यावन्ति ते वाञ्छन्ति। फलतः विदूरं यावत् कश्चनापि रत्नाहरणाय नहि याति। अतएव अनुदिनं वर्द्धमानः विदूराभिख्यः शैलः अस्य राज्ञो राज्यस्य समीपतरं गतः,। त्वं यदा एनं वरिष्यसि तदानूनं विदूरपर्वते क्रीडाया अवसरं लप्स्यसे। किञ्च-

नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्ग.जात,
च्छायान्तःपात चन्द्रायितचरण नखश्रेणिरैणेयनेत्रे।
दृप्तारिप्राणवातामृतरसलहरीभूरिपानेन पीनं,
भूलोकस्यैष भर्ता भुजभुजगयुगं सांयुगीनं विभर्ति।।

शतध्न्या धारकोऽयं राजा युद्धभूमौ समागतैः लक्षसंख्याकैरपि शत्रुभिस्साकमेकाक्येव युद्धं करोति न विभेति कदाचन। इत्थं श्रुत्वाऽपि मलयाधिपस्य वर्णनं दमयन्त्याः मनस्तस्मिन् न रमते स्म।

(ङ.) मिथिलाधिपस्य वर्णनम् :-

मलयाधिपस्योपेक्षां दमयन्त्या कृतामवेक्ष्य सरस्वती तामाहयदिदानीं यावन्मया येषां राज्ञां वर्णनं कृतं तेषु कस्यचनाऽपि विलोकनं त्वया नहि कृतम्। तवेदमाचरणमुचितं नह्याभाति। सम्प्रतं सम्मुखे विद्यमानस्य मिथिलापुरन्दस्य त्वालोकनं त्वया करणीयमेव। तदनन्तरमस्य वरणमवरणं वा तवायत्तं भविष्यति। अस्य राज्ञः शत्रवः स्वौष्ठस्य दंशनमेतस्मादेवकारणात् कुर्वन्ति, यस्मात् तैरोष्ठैः पाहि पाहीति ओष्ठयवर्णात्मकः शब्दः मिथिलाधिपस्य समक्षं नहि कृतम्। अस्यैव दोषात् शिरसां पांसुसु पतनम् संजातम्। तथा च-

'अस्योर्वीरमणस्य पार्वणविधुद्वैराज्यसज्जं यशः,
सर्वाङ्गोज्ज्वलशर्वपर्वतावसित श्रीगर्वनिर्वासि यत्।
तत् कम्बुप्रतिम्बितं किमुशरत् पर्जन्यराजिश्रियः,
पर्यायःकिमु दुग्धसिन्धु पयसां सर्वानुवादः किमु।।

येन प्रकारेण कृषकाः केदारान् कर्षयित्वा तस्मिन् बीजानि वपन्ति तेनैव प्रकारेण अश्वानां खुरैक्षुण्णयां भूमौः कर्तितकरिकुम्भ मौक्तिकेप्रकरं वपति। तेन

च प्ररोहति मिथिलाधिपस्तरुः। यतोऽयं राजा याचकेभ्यः कल्पनातीतं दानं ददाति अत एवायं कल्पितदानदातारं कल्पवृक्षमतिक्रामति।

**प्रश्न ९- नैषधीयचरितमहाकाव्यस्य प्रणेतुः श्रीहर्षस्य ऐतिह्यं विवृणुत।**

**उत्तरम्-** नैषधीयचरितमहाकाव्यस्य प्रणेता श्रीहर्षनामा महाकविः श्रीहीरपण्डितात् मामल्लदेव्यां समजनीति प्रतिसर्गस्यान्तिमेन श्लोकेन ज्ञायते। यथा प्रथमसर्गस्यान्तिमे श्लोके प्रोक्तं श्रीहर्षेण कविना-

'श्रीहर्षं कविराजराजिमुकुटालङ्काहीरः सुतम्,
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्। इति।

अयं महाकविः कान्यकुब्जेश्वरस्य जयन्तचन्द्रस्याश्रित आसीदिति निम्नांकितेन नैषधीयचरितमहाकाव्यस्य वाक्येन ज्ञायते-

'ताम्बूलद्वयमासनं च लभते यः काव्यकुब्जेश्वरात्।' इति

अनेन वाक्येनायमर्थः सिद्ध्यति यत् महाकविः श्रीहर्षः कान्य कुब्जेश्वरस्य विजयचन्द्रस्याथवा जयचन्द्रस्य सभापण्डितरूपेणासीदतीव प्रख्यातो महापण्डितः स्वयं कान्यकुब्जेश्वरः स्वहस्तेनामुं पण्डितप्रकाण्डं ताम्बूलद्वयं प्रायच्छत् स्वेनैवासनस्य निर्देशमकार्षीत् च ससम्मानम्।

केषाञ्चनैतिह्यविदां मतानुसारेण जयचन्द्र एव श्रीहर्षस्याश्रयदाता आसीत्। तस्य जयचन्द्रस्यैव पुत्र्याःसंयोगितायाः अपहरणं वीरवरः पृथ्वीराज अकार्षीत्। जयचन्द्रस्य राज्यकालः ११५६ इस्वीतः ११९३ ईस्वीं यावत् स्वीक्रियते। जयचन्द्रस्य स्थितिकाल एव श्रीहर्षस्यापि स्थितिकालः स्वीक्रियते।

इयमपि जनश्रुतिरास्ते यत् श्रीहीरः कान्यकुब्जेश्वरस्य सभापण्डित आसीत्। सः कदाचित् वादे न्यायकुसुमाञ्जलेः प्रणेत्रोदयनेने द्वारा पराजितो बभूव। तेन दुःखेन अतीव दुःखितो बभूव श्रीहीरः। सः स्वजीवनस्य चरमे काले स्वपुत्रं श्रीहर्षं सविधे आहूय प्राह; यदि सत्पुत्रोऽसि तदा त्वं उदयनं वादे पराजितं नूनं करिष्यसि तेन श्रीहर्षोऽपि तथाकर्तुं दृढमना बभूव। सः चिन्तामणिमन्त्रस्य जपमकार्षीत् गङ्गातटे समुपविश्य एकवर्षं यावत्। प्रसन्ना भगवती त्रिपुरा अस्य समक्षं प्रकटीभूय पूर्णवैदुस्यस्यास्मै वरमदात्। तेन श्रीहर्षस्य तथाविधं वैदुष्यमभवत् येन कश्चनापि तद् वचः नोऽग्रहीत्। तेन खिन्नमना श्रीहर्षः पुनः सरस्वतीं प्रसाद्य प्राह- मातः ममातिशयं वैदुष्यमपि मे दोषाय संजातम्।' तदा सरस्वती प्राह यत्- आर्द्रवस्त्रेण शिर आच्छाद्य रात्रौ तक्रं पिवेति। तथैवाकार्षीत् श्रीहर्षः। तेन तस्य बुद्धौ किञ्चिन्नैयून्यमगात्। पुनः श्रीहर्षः उदयनेन साकं

शास्त्रार्थं कृत्वा तं पराजय तिस्म अस्य विषयस्य संकेतः नैषधीयचरितमहाकाव्यस्य चतुर्दशसर्गस्य ८८ श्लोकत आरभ्य ९० श्लोकं यावत् त्रिषु श्लोकेषु समुपलभ्यते। नैषधीयचरितस्य सर्गाणामन्तिमश्लोकानामवलोकनेनाभाति यत् नैषधीयचरितरचनातः प्राक् अस्य महाकवेः निम्नांकिताः ग्रन्था आसन्।

(१) स्थैर्यविचारप्रकरणम्। (२) विजयप्रशस्तिः। (३) खण्डनखण्डखाद्यम्। (४) गौडोर्वीर्शकुलप्रशस्तिः। (५) अर्णववर्णनम्। (६) छिन्दप्रशस्तिः। (७) शिवभक्तिसिद्धिः। (८) नवसाहसाङ्क. चरितचम्पू। तथा चात्रप्रमाणानि-

(१) नैषधीय चरितस्य चतुर्थ सर्गसमाप्तौ-स्थैर्यविचारण प्रकरणभ्रातरि' इति प्राह श्रीहर्षः।

(२) पञ्चमसर्गसमाप्तौ- श्रीविजयप्रशस्तिरचनातातस्य' इति।

(३) षष्ठसर्गसमाप्तौ- षष्ठः 'खण्डनखण्डतोऽपि सहजात्।

(४) सप्तमसर्गसमाप्तौ- 'गौडोर्वीशकुलप्रशस्तिभणिति भ्रातरि इति।

(५) नवमसर्गसमाप्तौ- 'संदृब्धार्णववर्णनस्य' इति।

(६) सप्तदशसर्गसमाप्तौ- स्वसुःसुसदृशि 'च्छिन्दप्रशस्तेः। इति।

(७) अष्टादशसर्गसमाप्तौ- शिवशक्तिसिद्धिभगिनि सौभ्रात्रभव्ये इति।

(८) द्वाविंशसर्गासमाप्तौ 'नवसाहसाङ्क. चरिते चम्पूकृते।' इति।

नवमोग्रन्थः 'नैषधीयचरितमहाकाव्यम् त्वस्त्येव।

नैषधीयचरितमहाकाव्यम् श्रीहर्षस्योत्कृष्टकाव्यकौशलस्य अतीव देदीप्यमानं प्रमाणस्वरूपमास्ते। शिशुपालबधकाव्यप्रणयनानन्तरं प्रणीतानां काव्यग्रन्थानां भागद्वयं कर्तुं शक्यते- चित्रकाव्यात्मको विभागः चरितमहाकाव्यात्मको विभागश्च। नलोदयादिकानि काव्यानि प्रथमायां काव्यश्रेण्यामाटीकन्ते। श्रीकण्ठ चरितादिकानि च काव्यानि द्वितीयां श्रेणीमवगाहन्ते। श्रीहर्षप्रणीतम् नैषधीयचरितमहाकाव्यमिदं द्वितीयामेव श्रेणीमवगाहते।

श्रृङ्गारस्यविभिन्नानां स्थितीनां वर्णने श्रीहर्षमहाकवेः कवित्वप्रतिभा चारमां काष्ठां चुम्बति। काव्यमिदमतीवप्रौढमास्ते, अतएव केचन संकुचितविचारकाः काव्यस्यास्य यथायथं पर्यालोचनं नह्यकार्षुः। केचन तु काव्येस्मिन् अश्लीलत्वस्य दोषारोपणमप्यकार्षुः। परञ्च नैषधीयचरित महाकाव्यस्याध्ययनेनाभाति यत् सर्वमिदं कथनं सारहीनं वर्त्तते। श्रीहर्षेण तु स्पष्टतया कथितमस्यमहाकाव्यस्योपसंहारभागे-

'ग्रन्थ ग्रन्थिरिह क्वाचित्क्वचिदपि न्यासि प्रयत्नान्मया।
प्राज्ञं मन्यमना हठेन पठितीमास्मिन् खलः खेलतु।

श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय,
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः।।

अस्मिन् महाकाव्यग्रन्थे पदरचनायाः नैपुण्यम्, भावानां विन्यासविचक्षणता, कल्पनायाश्चरमं चातुर्यम्, प्रकृतिपर्यवेक्षणस्य सूक्ष्मेक्षिका च सर्वत्र महत्या मौलिकतया पदे-पदे विलोक्यन्ते सुधीभिः। प्रणयपक्षस्य यादृशं समर्थ संयतं हृदयग्राहि च चित्रणं नैषधीयमहाकाव्येऽस्मिन् विलोक्यते तादृशं ,चित्रणं, अंगुलिगण्येष्वेवकाव्येषु समुपलभ्यते। काव्यमिदं वैशिष्ट्यवैपुल्यमाहिम्नैव वृहत्त्रय्यां सर्वोत्तमं स्थानं लभते। एतस्मात् महाकाव्यात् प्राक् किरातार्जुनीयशिशुपालवध ामहाकाव्ययो: कर्त्रोः महती प्रख्याति असीत्। किन्तु यदा महाकाव्यस्यास्यावलोकनमकार्षुः समीक्षकाः तदा तैः मुक्तेन कण्ठेनाभिहितम्- 'उदिते नैषधे काव्ये क्व माघः क्व च भारविः' इति।

नैषधीयचरितमहाकाव्यस्य व्याख्यातृणां निम्नांकितानां समुल्लेखमकार्षीत् शिवदत्तशर्मा स्वेन सम्पादिते निर्णसागरमुद्रणालयात् प्रकाशिते नैषधीयचरितस्य प्राक्कथने।

(१) आनन्दराजानकः (२) ईशानदेवः (३) उदयनाचार्यः (४) गोपीनाथः (५) चण्डूपण्डितः (६) चरित्रवर्धनः (७) जिनराजः (८) नरहरिः (९) नारायणः (१०) भगीरथः (११)भरतमल्लिकः (१२) भगवद्दत्तः (१३) मथुरानाथशुक्लः (१४) मल्लिनाथः (१५) महादेववागीशः (१६) रामचन्द्रशेषः (१७) वंशीवदनशर्मा(१८) विधाधरः (१९) विद्यारण्ययोगी (२०) विश्वेश्वराचार्यः (२१) श्रीदत्तः (२२) श्रीनाथः (२३) सदानन्दश्च

एतेषु सत्स्वपि व्याख्यातृषु मल्लिनाथप्रणीतायाःजीवातुव्याख्यायाः, नारायणप्रणीतायाः, नैषधीयप्रकाशव्याख्यायाश्च समुपलब्धिर्जायते। शिवदत्त शर्मापञ्चनददेशीयविश्वविद्यालयान्तर्गत-संस्कृत-श्रेण्यध्यक्षप्रधानाध्यापकः महामहोपाध्यायोपाधिना समलङ्कृतः, स्वसम्पादिते ग्रन्थे साहित्यविद्याधर्या अपि भृशमुपयोगमकार्षीत् अलङ्कारनिरूपणविषये। यद्यपि जीवातुप्रकाशयोः नूनं शेखरायते प्रकाशव्याख्या नारायणेन कृता, किन्तु साम्प्रतम् प्रचारः जीवातु व्याख्याया एव सर्वत्रावलोक्यते।

**प्रश्न १०- निम्नांकितासु कामप्येकां सूक्तिं समर्थय-**

**(१) नैषधं विद्वदौषधम्**

**(२) उदिते नैषधे काव्ये क्व माघःक्व च मारविः।**

**(३) नैषधे पदलालित्यम् इति च।**

**अथवा- नैषधं विद्वदौषधमिति सूक्तेः विवेचनं विस्तरेण कुरूत।**

**उत्तरम्-नैषधे पदलालित्यम्-** महाकविः श्रीहर्षः कर्ता नैकेषां ग्रन्थानाम् संस्कृतसाहित्याकाशस्य सर्वासु दिक्षुविदिक्षु च नैजीं हैरिकीं कान्तिं वितनोतीत्यत्र नाऽस्ति कश्चनाऽपि विसम्वादलेशः। खण्डनखण्डखाद्याभिधस्य दर्शनशास्त्रीयग्रन्थस्य प्रणेता महाकविः श्रीहर्षः श्रृङ्गाररसप्रविभागशतस्य व्याकर्तृरूपेणाभाति नैषधीयचरितमहाकाव्ये। अस्मिन् महाकाव्येऽपि महाकवेरस्य दर्शनशास्त्रीयं विशदं नैपुण्यं व्याकरणशास्त्रस्यासाधारणपरिचयः, मीमांसाया निर्मलं नैपुण्यम् कोशग्रन्थानामसमोऽभ्यासः, सहृदयहृदयाह्लदिका साहित्यशास्त्रस्याद्भुता प्रौढिश्च पदे-पदे सर्वाण्येतानि तत्त्वानि अक्षिलक्षी क्रियन्ते।

नैषधीयचरितमहाकाव्यस्य प्राक् शिशुपालवधमहाकाव्यप्रणेतुः माघमहाकवेः किरातार्जुनीयमहाकाव्यप्रणेतुः महाकवेः 'भारवेश्च महती ख्यातिरासीत्। किन्तु नैषधीयचरितमहाकाव्यस्यावतरणे संजाते सति तु तयोःख्याति विलुप्ता बभूव। अतएव वृहत्त्रय्याम् श्रीहर्षप्रणीतस्य नैषधीयचरितमहाकाव्यस्य प्रप्रथमं स्थानं बभूव सहृदयानां दृशा। महाकाव्यमिदमवलोक्य साहित्यशास्त्रपर्यालोचकैः कण्ठरवेणाभिहितम् **'उदिते नैषधे काव्ये क्वमाघः क्व च भरविः** इति।

महाकाव्यमिदं पाण्डित्यप्रौढेः निकषस्वरूपमास्ते। काव्यकोश व्याकरण-दर्शनादिग्रन्थानां निपुणस्य अभ्यासस्य ग्रन्थस्यास्याध्ययनायापेक्षितो भवति, न तु भवितुमर्हति पण्डितभ्मन्यानाम् सामान्यानां जनानामत्र प्रवेशः। अतएव महाकविः श्रीहर्षः स्वयमेव अस्य महाकाव्यस्य उपसंहारभागेऽलेखीष्ट-

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान् मया,
प्राज्ञं मन्यमना हठेन पठिती मास्मिन् खलः खेलतु।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थि समासादय-
त्वेतत् काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः।

यदि यौवनरसोर्मिनिर्भरा, प्रौढ़ा, विश्वसुन्दरी प्रौढ़जनमनः प्रह्लदनक्षमाऽपि कस्यचनानाविष्कृतकामस्य, किमपि कर्तुमसमर्थस्य कुमारस्य मनः प्रह्लादनं नहि करोति दृष्टिपथम् तदा तत्र तस्याः, रमण्याः को दोषः? दोषस्तु असमर्थतायाः एव वर्त्तते। अनेनैव प्रकारेण विविधालङ्कारैः समलंकृतम्, श्रृङ्गारस्य शतधाराप्रवाहेण परिपूर्णम्, नानाविधकल्पनाप्रावण्यप्रचुरम्,

पाण्डित्यप्रौढिपरिपूर्णञ्च नैषधीयचरितमहाकाव्यं कस्यचन अनधिगतपदवाक्यप्रमाणकाव्यकोशव्याकारणादिशास्त्रपुरुषस्य, प्रतिबन्धि पाण्डित्यस्य मनः प्रह्लादनं नहि करोति तत्र तु इदमेव वक्तुं शक्यते- 'नैष स्थाणोरपराधः यदेनमन्धो न पश्यति। आह चापि महाकविना श्रीहर्षेण-

'यथा यूनस्तद्वत् परमरमणीयापि रमणी,
कुमाराणामन्तःकरणहरणं नैव कुरूते।
मदुक्तिश्चेदन्तर्मदयति सुधीभूयसुधियः,
किमस्यानाम स्यादरसपुरुषानादरभरः।।

नूनं युवत्याः कामिजनमनःसर्वस्वभूतयाः आस्वादनं तु कश्चन युवैव पुरुषः कर्तु समर्थो भवति न तु कश्चनानुद्भुतपौरूषः कुमारः।

महाकविः श्रीहर्षः काव्य-व्याकरण-सांख्य-योग-पूर्वमीमांसा-वेदान्त-बौद्धदर्शन-जैनदर्शन-चार्वाकदर्शन प्रभृतीनामनेकेषां विषयाणामसमो विद्वानासीत्। अतएव सः एतेषां समेषां विषयाणां, नैषधीयचरितेऽस्मिन् मनोज्ञतमे महाकाव्ये सन्निवेशमकार्षीत्।

महाकाव्यस्यास्य पदलालित्यमेकमद्भुतं वैशिष्ट्यमास्ते। निम्नांकितेषु केषुचन वाक्येषु पदालालित्यमवलोकनीयम्। तथाहि-

(१) अधारि पद्मेषु तदंघ्रिणा घृणा, क्व तच्छयच्छायलवोऽपि पल्लवे।' इति।

(२) न का निशि स्वप्नगतं ददर्श तं, जगादगोत्रस्खलिते च का न तम्। इति। तदात्मताघ्यातधवा रते च का, चकार वा न स्वमनोभवोद्भवम्। 'इति।

(३) अहो अहोभिर्महिमाहिमागमेऽप्यभिप्रपेदे प्रति तां स्मरार्दिताम्। तपर्तुपूर्तावपि मेदसां भरा, विभावरीभिर्विभरां बभूविरे। इति।

(४) चलनलंकृत्य महारयं हयं, स्ववाहवाहोचितवेषपेशलः। इति

(५) दिन-दिने त्वं तनुरेधिरेधिकं पुनः पुनर्मूर्छ च तापमृच्छ च' इति।

(६) मुहूर्तमात्रं भवनिन्दया दया, सखाः सखायं स्रवदश्रवो मम। 'इति।

(७) नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे।
अपिसज्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम्। इति च।

एतेषु समेषु श्लोकेषु क्वचिदनुप्रासः क्वचिच्च यमकम् पदलालित्यमातनोति।

क्वचित्तु पयदानां सौकुमार्यमेव श्रुतिसुखप्रदत्वमावहति। तदपि निम्नांकितेंषु श्लोकेषु आञ्जस्येनावलोकनीयम् तथाहि-

(१) **धन्यासिवैदर्भिगुणैरूदारैर्यया समाकृष्यत नैषधोऽपि।**
**इतः स्तुतिः का खलु चन्द्रिकायाः यदब्धिमप्युत्तरली करोति।**

(२) सपीतेः संप्रीते रजनिरजनीशःपरिषदा।
परीतस्ताराणां दिनमणि मणिग्रावमणिकः।।'

(३) यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी,
कुमाराणामन्तः करणहरणं नैव कुरूते।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरूषानादरभरैः।।

अनेन प्रकारेण नैषधीयचरिते महाकाव्येऽस्मिन् **लालित्यं हि पदे-पद** साहित्यस्य रसास्वादचणपैरवलोक्यते। क्वचित् प्रसादो माधुर्य च वाक्येषु विलोक्यते। क्वचिदोजोगुणश्चापि विद्वद्भिरवलोक्यते। यत्र प्रसादमाधुर्यगुणौ स्याताम् सङ्ग.तौ। लालित्यं तत्र तनुते विचित्रामेव सम्पदम्। वैशिष्ट्यानि समग्राणि लालित्योपयोगीनि नैषधीयचरितमहाकाव्ये समुपलभ्यन्ते यस्मात् तस्माद् युक्तमेवोक्तं समालोचकैः- **नैषधे पदलालित्यमिति।**

**नैषधंविद्वदौषधम्**-महाकवेः श्रीहर्षस्य प्रतिभा चतुरस्रा आसीत्। विविधाशास्त्र पारंगमोऽयं महाकविः नैषधीयचरितमहाकाव्यनिबन्धने स्वकीयामतुलनीयां व्युत्पत्तिं प्रदर्शयामास। तस्मादेवकारणात्-काव्यमिदं क्लिष्टत्वं दुरूहत्वं च स्पृशतिस्म। अस्मिन् महाकाव्ये नैकेषां शास्त्राणां सिद्धान्तवर्णनम्, श्लेषमयक्लिष्टपदप्रयोगबहुज्ञताप्रदर्शनं च सर्वत्रोपोलभ्यते। सम्पूर्णेऽस्मिन् महाकाव्ये यत्र-तत्र समुपलभ्यते महाकविना प्रयुक्ताः व्याकरण-न्याय- वैशेषिक-सांख्य-योग-पूर्वमीमांसा-वेदांत चार्वाकदर्शन-बौद्धदर्शन-जैन दर्शनादीनां अतीवरहस्यात्मकाः सिद्धान्ताः। अतएव महाकाव्यस्यास्य ज्ञानं तेषां तेषां सिद्धान्तानां ज्ञानमन्तरा नहि सम्पत्तमहति। तथाहि 'अपवर्गे तृतीया, इति प्राह भगवान् पाणिनिरष्टाध्यायिसूत्रेषु। तत्र नैषधकारः प्राह-

'उभये प्रकृतिः कामे सज्जेदिति मुनेर्मनः।
अपवर्गे तृतीयेति भणतः पाणिनेरपि।

अयमाशयो लिङ्ग.त्रयं हि प्रख्यातमास्ते संस्कृतसाहित्ये। पुल्लिङ्ग.स्त्रीलिङ्ग.

योः वाच्यभूते कस्मिंश्चिदपि अर्थे कृतायां निष्ठायां मनः कामानुरक्तं स्यात्, स्त्रीपुंसोः कामाश्रितावस्य प्रख्याततत्वात् फलतः ताभ्यां व्यतिरिक्तस्य तृतीयस्य नपुंसकस्यैव ब्रह्मण:आराधनेनापवर्गप्राप्तिः संभवति नपुसंकेकामाभावस्यापि प्रख्यातिर्लोके दृश्यत एव। इममेवार्थमाह भगवान् पाणिनिरपवर्गे तृतीयेति। अनेनैव प्रकारेण महाकविः तृतीयसर्गेऽप्याह-

'क्रियेत येत् साधुविभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया।
या स्वौजसां साधयितुं विलासैः तावत् क्षमानामपदं बहु स्यात्।

अत्र व्याकरणशास्त्रस्य सिद्धान्तो निम्नप्रकारेणाभिव्यज्यते-चेत् यदि साधु सम्यग्विभक्तीनां सुप्तिङ्.ां चिन्ता = विचारणा क्रियेत तदा सा व्यक्तिः = प्रथमाभिधेया = प्रथमेत्यभिधेयं संज्ञा यस्याः सा, साक्षाद् या स्वौजसाम् = एकवचन-द्विवचन-वहुवचन संज्ञाकानां प्रत्ययानां विलासैर्यथासंभव विसर्जनीयलोपामादेशशीभावादिरूपैः प्रकारविशैषैर्बहुनाम् प्रतिपदिकं सुबन्तं साधयितुं = कर्तु निष्पादयितुम् तावदतितरां क्षमा = समर्था स्याद् भवति साव्यक्तिः प्रथमाभिधेया व्यज्यतेऽनया प्रातिपदिकार्थ इति व्यक्ति:र्विभक्तिः प्रथमेत्यभिधेया। अथ च-साधुविभक्तीनां चिन्ता विचारो यदि क्रियते तर्हि एकवचनादिसंज्ञकानां स्वौजसां मध्यें या प्रथमा व्यक्तिविभक्तिः सुलक्षणा सैवाभिधेयेति यावत्। प्रयोगयोग्यत्वाय **'एक वचनमुत्सर्गतः करिष्यते'** इति न्यायेन सु विभक्तिरेव विधेया भवतीति भावः।

नैयायिकानां मतानुसारेण तदैव मुक्तिर्भवति यदा समेषां विशेषगुणानामुच्छेदे भवति जीवस्य। तस्यामवस्थायां जीवे आनन्दनामकोऽपि विशेषगुणो नहि भवति इतीममर्थ प्रकाशयता मुनिना गौतमेनाभिहितम्- **'सकलविशेषगुणोच्छेदो मुक्तिः'** इति **'तदत्यन्तविमोक्षोपवर्गः'** इति च। अस्य अर्थस्योपहासं कुर्वता महाकविना अभिहितम् नैषधीयचरितस्य सप्तदशे सर्गे-

'मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेक्ष्यैव यथा वित्थतथैव सः।।

वैशेषिकदर्शनानुसारेण तमसः प्रकाशाभावरूपतैव स्वीक्रियते। तथा चोक्तं वैशेषिके दर्शने **''भासाभाव एव तमः** इति। अस्य दर्शनस्योपहासं कुर्वता श्रीहर्षेणाभिहितम्-

'ध्वान्तस्य वामोरूविचारणाया, वैशेषिकं चारुमतं मतं मे।
औलूकमाहुः खलुदर्शनं तत् क्षमं तमस्तत्वनिरूपणाय।। इति।

अयमाशयो यत् तमसः स्वरूपनिरूपणविषये वैशेषिकं भावं षट्पदार्थसाधर्म्यवैधर्म्यनिरूपणात्मकं काणादं दर्शनं समुपस्थितो भवति। यत् सम्प्रदायविदः तद्दर्शनं औलूकमाहुः। अतएवैतद्दर्शनं तमसस्तत्त्वनिरूपणाय समर्थम्। वैशेषिकमप्युलूकापरनाम्ना कणादमुनिना प्रोक्तमित्यौलूकं दर्शनम्। ततश्चैतदपि तमस्तत्त्वनिरूपणाय समर्थमिति युक्तमित्यर्थः।

अद्वैतसिन्द्धान्तानुसारेण मुक्तौ जीवाः ब्रह्मणि लीयन्ते। सन्मात्रमवशिष्यते ब्रह्म। ब्रह्मव्यतिरिक्त नास्ति पारमार्थिकं किञ्चित्। अस्य मतस्योपहासं कुर्वता महाकविना अभिहितं यत् सिद्धान्तोऽयं तर्कतत्त्वपराङ्.मुखानाम्। को नाम स्वविनाशय प्रयतेत। यदि नाम मुक्तौ मे विनाशो भविष्यतीति कश्चनावगच्छेत् तदा सः कदापि मुक्तिप्राप्त्युपयोगिनाम् श्रवणमननिदिध्यासनादीनामनुष्ठानं कथंकारं कुयर्ति। सः तु मोक्षकथाप्रस्तावगन्धतोऽप्यपसरेत्। तथाहि-

'स्वं च ब्रह्म च संसारे मुक्तौ तु ब्रह्मकेवलम्।
इति स्वैच्छिति मुक्त्युक्तिवैदग्धी ब्रह्मवादिनाम्।।

श्रीहर्षस्य पूर्णतया अद्धैतसिद्धान्त एव श्रद्धा आसीत् ब्रह्मैव सन्मात्रं पारमार्थिकम्। तद् व्यतिरिक्तमखिलं तस्मिन्नेव परिकल्पितम् मिथ्यातयोलभ्यमानानां गुणानां प्राचुर्यमत्रावलोक्यते।

अस्मिन् महाकाव्ये भाषायाः काठिन्यं यदि समुपलभ्यते तदा तस्यापरं मृदुरूपमपि समुपलभ्यते। भावानां गाम्भीर्ये सत्यपि सौष्ठवं न विजहाति क्वापि। रसपरिषाकः यद्यस्य महाकाव्यस्य वैशिष्ट्यमास्ते तदा दार्शनिकानां विषयाणामपि तत्र सन्निवेशः समुपलभ्यतेऽस्मिन् महाकाव्ये महाकविः श्रीहर्षो भाषाम् स्वमनोनुकूलमेव नर्तयति। रस भाव भावभास गुणा- लङ्कारीतीनामाश्रयणं तु सः यथेच्छमेवकरोति तत्र-तत्र।

अनेकार्थकानां श्लोकानां विन्यासः श्रीहर्षस्य परमं वैशिष्ट्यमास्ते तृतीय सर्गस्य सप्तषष्ठितमस्य श्लोकस्य तृतीयः पादो वर्त्तते 'चेतो नलङ्कामयते मदीयम्।' अस्य वाक्यांशस्य भिन्न-भिन्न बिग्रहानुसारेण भिन्नाः भिन्नाः अर्थाः भवन्ति। तथाहि-

(१) मदीयं चेतो नलं कामयते।' इति प्रप्रथमोऽर्थः।
(२) मदीयं चेतोः लङ्का न अयते। इति द्वितीयोऽर्थः। अनेनार्थेन द्वारा भैमी स्वकीयामनभिलषितां प्रकटयामास।
(३) यदि नलो नोपलभ्येत तर्हि तु मदीयं चेतः अनलं कामयते।

अनेनार्थेन द्वारा भैम्याः विना नलं जीवने स्पृहाराहित्यं सूचितं भवति।

**अनेनैव प्रकारेण त्रयोदशसार्गस्य -**

**'देवः पतिर्विदुषि नैषधराजगत्या,**
**निर्णीयते न किमु न व्रियते भवत्या।**
**नायं नलः खलु तवातिमहानलाभो,**
**यद्येनमुज्झसि वरः कतरः परस्ते।**

इति श्लोकस्य पञ्च अर्थाः प्रख्याताः सन्ति। ते चार्थाः सन्ति- इन्द्र-अग्नि-यम-वरुण-नल परार्थानां भेदेन। त्रयोदशसर्गस्य प्रायेण सर्वे श्लोकाः द्व्यर्थकाः सन्ति।

अर्थगौरवं तु महाकाव्यस्यास्य प्रख्यातमेव। सरस्वत्याः वर्णनं दशमे सर्गे अर्थगौरवमयमेवास्ते। अतएव सत्यमेवाभिहितम् समालोचकैः **उदिते नैषधे काव्ये क्व माघः क्व च भारविरिति।**

**प्रश्न ११-नैषधीय चरितमहाकाव्ये महाकाव्यस्य सर्वेगुणाः सन्ति नवेति विचारयत।**

नैषधीयचरितमहाकाव्यस्य महाकाव्यत्वपरीक्षणायावश्यकता भवति महाकाव्यस्य लक्षणज्ञानस्य। तत्र महाकाव्यस्य स्वरूपनिरूपणं कुर्वता, साहित्यदर्पणकर्त्रा विश्वनाथेनाभिहितम्-

'सर्गबन्धो महाकाव्यम् तत्रैको नायकः सुरः।
सद्वंशः क्षत्रियो वाऽपि धीरोदात्तगुणान्वितः।।
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।
श्रृङ्गारवीरशान्तानामेकोङ्गी रस, इष्यते।
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसंधयः।
इतिहासोद्भवं वृत्तम् अन्यद्वा सज्जनाश्रयम्।
चत्वारस्तस्य वर्गाः स्युःतेष्वेकं च फलं भवेत्।
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा।
क्वचिन्निन्दाखलादीनाम् सतां च गुणकीर्तनम्।
एकवृत्तमयैः पद्यैः अवसानेऽन्यवृत्तकैः।
नातिस्वल्पाः नातिदीर्घाः सर्गा अष्टाधिका इह।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते।
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्।

सन्ध्यासूर्येन्दुरजनी प्रदोषध्वान्तवासराः।
प्रातर्मध्याह्नमृगया शैलर्तुवनसागराः।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः।
रणप्रयाणोपयममन्त्रपुत्रोदयादयः।
वर्णनीयाः यथायोगं साङ्गा अमी इह।
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा।
नमास्य सर्गोपदेयकथा सर्गनाम तु।। इति।

यद्यपि लक्षणमिदं महाकाव्यस्यातीव विस्तृतमास्ते; किन्तु अस्मिन् महाकाव्यलक्षणे प्रायेण महाकाव्यस्य सम्पूर्णानि लक्षणानि समुपलभ्यन्ते। तथाहि महाकाव्यमिदं सर्गेषु निबद्धमास्ते। अस्मिन् महाकाव्ये द्वाविंशतिसंख्याकाः सर्गाः सन्ति। अस्य महाकाव्यस्य नायकः सद्वंशप्रसूतः निषधाधिपस्यात्मजः क्षत्रियश्च वर्त्तते। सोऽयं राजा नलः धीरादात्तो नायको वर्त्तते। धीरोदात्तनायकस्य लक्षणं निरूपयन् साहित्यदर्पणकारः प्राह साहित्यदर्पणस्य तृतीये परिच्छेदे-

'अविकत्थनः क्षमावान् अतिगम्भीरो महासत्त्वः।
स्थेयो निगूढमानो धीरोदात्तो दृढव्रतः कथितः।। इति।

नलः स्वयमात्मश्लाघापराङ्मुखो वर्त्तते। अतएवास्याविकत्थनत्त्वम् प्रख्यातम्। शरणागतानां शत्रूणामपि राज्ञाम् प्राणस्य रक्षां करोति अतएवायं क्षमावान् वर्त्तते। नलः महासत्त्वो वर्त्तते। तथा चोक्तम् श्रीहर्षेण महाकविना-

'अनल्पदग्धारिपुरानलोज्ज्वलैः, निजप्रतापै वलयज्ज्वलद्भुवः
प्रदक्षिणीकृत्य जयाय सृष्टया रराज नीराजनया स राजघः।।

अयं राजा युद्धेषु स्थिर आसीत्। अतएव सः सर्वान् राज्ञः स्ववशी चकार। निगूढमानत्वमस्य प्रख्यातो वर्त्तते। यदायं दमयन्त्याः सौन्दर्यं श्रुत्वा तस्यामासक्तमना भवति, तदेमं बाधते कामसंतापः तदाऽयं स्वमनोविनोदाय स्वसम्मानसंरक्षणाय च राजोद्याने याति। अतएव राजनि नले सर्वे गुणाः सन्ति धीरोदात्तनायकस्य।

अस्य महाकाव्यस्य श्रृङ्गाररस एवाङ्गीरसो वर्त्तते। यद्यपि अन्येषामपि रसानामत्र अद्भुतादीनां समावेशमकार्षीत् महाकविः तथापि ते समे रसाः अस्य श्रृङ्गाररसस्य परिपोषकत्वादङ्ग.भूताः रसाः सन्ति।

नैषधीयचरितमहाकाव्यस्य कथा मूलरूपेण महाभारते वर्त्तते। अतएव इतिहासोद्भवा कथा अस्य महाकाव्यस्य वर्त्तते। मानवजीवनस्य तु यद्यपि

धर्मार्थकाममोक्षाख्यानि चत्वारि एव फलानि सन्ति, किन्तु अस्य महाकाव्यस्य फलमास्ते चरमं श्रवणसमकालमेव विगलितवेद्यान्तरं परमानन्दप्रापणम्।

अस्य ग्रन्थस्यादौ महाकविः श्रीहर्षः वस्तुनिर्देशात्मकं मङ्गलाचरणं निम्नांकितमकार्षीत्-

'निपीय यस्य क्षितिरक्षिणः कथाः,तथाद्रियन्ते न बुधाः सुधामपि।
नलः सितच्छत्रितकीर्तिमण्डलः, सराशिरासीन्महसां महोज्ज्वलः।।

नलस्य कथा स्वयमेव कलिदोषविनाशिनी वर्त्तते। तथा चोक्तं महाकविनैव-

पवित्रमत्रातनुते जगद्युगे, स्मृतारसच्छालनयेव यत्कथा।
कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति।

अस्मिन् महाकाव्ये स्थाने-स्थाने सताम् प्रशंसनम् खलानाञ्च निन्दा समुपलभ्यते।

वृत्तविषयेऽपि दृश्यते यत् अवसाने सर्गस्य वृत्तस्य परिवर्तनं भवति। तथा प्रथम सर्गस्योपक्रमो भवति वंशस्थवृतेन किन्तु सर्गस्योपसंहारो भवति शार्दूलविक्रीडितेन। अनेनैव प्रकारेण द्वितीयसर्गस्याप्युपक्रमो भवति वैतालीयेन छन्दसा। किन्तु तस्योपसंहारो भवति पुष्पिताग्रावृतेन, शार्दूलाविक्रीडितेन च। अनेनैव प्रकारेण सर्वत्र विलोकनीयम्। केचन सर्गा अनेकवृत्तमया अपि सन्ति। सर्गस्यान्ते महाकविः भाविसर्गस्य कथामपि सूचयति महाकविः। यथा द्वितीयसर्गस्यान्ते तृतीयसर्गस्य कथां सूचयन् कविर्वक्ति-

'अनुभवति शचीत्थं स घृताचीमुखीभिः,
न सहसहचरीभिः नन्दनानन्दमुच्चैः।
इति मतिरूदियासीत् पक्षिणः प्रेक्ष्य भैमी,
विपिनभुवि सखीभिः सार्द्धमाबद्धकेलिम्।।

अत्र सन्ध्याकालस्य चन्द्रोदयस्य शैलादिकस्य च वर्णनमुपलभ्यते तत्र-तत्र। अस्य महाकाव्यस्य नामापि नैषधाधिपतिं नलमाश्रित्यैव कृतम् नैषधीयचरितमिति। सर्वाणि महाकाव्यस्यं लक्षणान्याञ्जस्येन समन्वितनि भवन्ति अस्मिन् महाकाव्ये।

**प्रश्न १२- निम्नांकितस्य श्लोकस्य व्याख्याऽनिवार्यतया कार्या पञ्चस्वर्थेषु।देवः पतिर्विदुषि नैषधराजगत्या --------- परस्ते।।**

**सन्दर्भादिकम्**-महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य त्रयोदशात् सर्गात् गृहीतो वर्त्तेऽयं श्लोकः। दमयन्त्याः स्वयम्बरसभायां समागतानां समेषां राज्ञां वर्णनस्य प्रसङ्गे.न भगवती सरस्वती नलस्य वर्णना

कुर्वन्ती तथाविधानां पदानां प्रयोगं करोति यानि पदानि समानरूपेणान्वितानि भवन्ति इन्द्र-अग्नि-यम-वरूण-नलानां पञ्चानामर्थेषु। अतएव श्लोकमिमं श्रुत्वा भीमराजपुत्री दमयन्ती भ्रमिता बभूव यत् यस्य वर्णनं क्रियते भगवत्या सरस्वत्या स नल एव वर्त्तते अथवा तद्व्यतिरिक्तः कश्चनान्यो देवो वा।

**अन्वयः-** हे विदुषि! एष धराजगत्याः पति न, देवः भवत्या न निर्णीयते किमु? न व्रियते किमु? अयं तव नलो न खलु अतिमहानलाभः, यद्येनमुज्झसि पुन ते वरः कतरः।

**अथवा**

भवत्या एष धराजगत्याः पतिः देवः नैषधराजगत्या पति न निर्णीयते किमु? न व्रियते किमु? अमुना नलः खलु एनमुज्झसि यदि तव अति महान् अलाभः ते वरः पुनः कतरः।।

**व्याख्या**-आचार्यो मल्लिनाथः अस्य श्लोकस्य निम्नप्रकारेण पञ्चस्वर्थेषु व्याख्यां चकार-

**तत्रेन्द्रपक्षे व्याख्या-** हे विदुषि- हे विदग्धे = मदुक्तिवैचित्र्याभिज्ञे एषः धराजगत्याः = भूलोकस्य पतिः न, किन्तु देवः एव जातवेक वचनम्; एते न भूपाः किन्तु देवा इत्यर्थः। भवत्या न निर्णीयते किमु? न व्रियते किमु? मर्त्यवरणात् वरममर्त्यवरणमेवेति भावः। अथवा धरान् पर्वतान् अजति इति धराजः = इन्द्रः। न निर्णीयते इति न निर्णीयते। स एव गतिः = शरणं यस्या इति धराजगतिः = प्राचीदिक्, तस्याः पतिः एव देव इन्द्रः न निर्णीयते। अपितु निर्णीयत एव अतएव उ इति सम्बोधनम्। उ = भोः! भवत्या किम् = कथं न व्रियते! अयमेव ते वरणीय इति भावः।

**अग्निपक्षे तुः-** धरो = वाहनम् अजः = छागः यस्येति धराजो बह्निः अग्नेरजबाहनत्वश्रवणत् स एव गतिः शरणं यस्याः तस्याः आग्नेय्याः दिशः पतिरेष देवोऽग्निः न निर्णीयते इति अन्यत् सर्वं पूर्ववत्।

**यमपक्षे तुः-** धरान् = पर्वतान्, अजति = शृङ्गाभ्यां खुरैर्वा क्षियतीति धराजः महिषः तेन या गतिः गमनम् तयोपलक्षितः पतिः धर्मरूपत्वात् पालकः देवः यमः अन्यत् पूर्ववत्।

**वरूणपक्षे तुः-** धरायां = पृथिव्यां जायन्ते इति धराजानि, स्थावरजङ्गमानि भूतानि, तेषां गतिजीवनोपायो, जलं तस्याः पतिः जलाधिपतिरित्यर्थः वरुणः न निर्णीयते इति न, अन्यत् पूर्ववत्। अयं तव सम्बन्धी त्वत्प्रार्थितः

इत्यर्थः, नलो न खलु किन्तु अतिमहा = मनुष्यापेक्षया अतितेजाः, नलाभः = नलकल्पः नैते नलाः किन्तु नलप्रतिरूपका इत्यर्थः, यद्येनम् उज्जसि = एषामन्यतमं न वृणोषि चेदित्यर्थः पुनः पश्चात् ते तव व्रियते इति वरः = वरणीयः वृङ्गोऽप् कतरः? = न कश्चिदस्ति। सत्यनलस्यदुर्लभत्वादिति भावः।

**नलपक्षे तुः-** भवत्या एषः धराजगत्याः = भूलोकस्य पतिः = रक्षकः देवो = राजा 'देवः सुरे धने राज्ञि' इति विश्वः नैषधराजगत्या नलमहाराजरूपेण नैषधराजस्य नलस्य गत्या = ज्ञानेन वा, अथवा- नैषधराज एव गतिः जीवनोपायो यस्यास्तया, भवत्या इत्यस्य विशेषणम् पतिर्भर्ता न निर्णीयते किमु? न व्रियते किमु? अयं ना पुरूषः नलः खलु अतोऽयमेव वरणीय इत्यर्थः एनं नलम् उज्झसि यदि तव अति = महान् अलाभः = अनर्थः वा इत्यादिपूर्ववत्।

**समासः- धराजगत्याः** -धरान् अजतीति धराजः, स एव गतिर्यस्याः सा धराजगतिः तस्याः = धराजगत्याः। अथवा- धरः अजो यस्येति धराजः। स एव गतिर्यस्याः तस्याः = धराजगत्याः। अथवा- धरायां जायन्ते इति धराजाः

# नैषधीयचरितसोपानम्

## व्याख्यात्मको भागः (प्रमुखाणां श्लोकानांव्याख्या)

### दशमसर्गतः त्रयोदशसर्गं यावत्

**श्लोक १- नृपः पुरस्थैः प्रतिरूद्धवर्त्मा ----------- अमन्यतस्वम्।**

**सन्दर्भप्रसङ्गौ-** अयंश्लोकः महापण्डितेन श्रीहर्षेण प्रणीतस्य नैषधीयचरतिममहाकाव्यस्य दशमसर्गात् गृहीतो वर्त्तते। अस्मिन् श्लोके महाकविः दमयन्तीस्वयंम्बरे समागच्छतां राज्ञां वर्णनं कुर्वन् वक्ति यत् दमयन्त्याः स्वयम्बरे समागच्छतां राज्ञां महान् सम्मर्दः समभवत्। अग्रगमनस्यावसरमेव नालभत कश्चनापि राजा। अतएव स्वगन्तव्यं यावद् गमनाय महान् प्रयासः करणीयोऽभवत् तदा।

**अन्वयः-** पुरस्थैः प्रतिरूद्धवर्त्मा पश्चातनैः नुद्यमानः कश्चन नृपः यन्त्रस्थसिद्धार्थ पदाभिषेकं लब्ध्वा अपि स्वम् असिद्धार्थम् अमन्यत।

**व्याख्या-** पुरस्थैः = पुरः = अग्रे स्थिताः विद्यमानाः ये तैः = अग्रे विद्यमानैरित्यर्थः प्रतिरूद्धवर्त्मा = प्रतिरूद्धम् = अवरूद्धम्, वर्त्म = मार्गः यस्याऽसौ तथाविधः पश्चातनैः = पृष्ठभागे विद्यमानैः जनैः, नुद्यमानः = प्रेर्यमाणः कश्चन = कोऽपि, नृपः = राजा, यन्त्रस्थ सिद्धार्थपदाभिषेकः = यन्त्रस्थाः = तैलाकर्षणयन्त्रस्थाः सिद्धार्थाः = सर्षपाः, तेषां पदे = स्थाने, अभिषेकं लब्ध्वापि संप्राप्यापि, स्वम् = आत्मानम्, असिद्धार्थम् = नहि सिद्धः = लब्धः, अर्थः = प्रयोजनम् येनाऽसौ तथाविधम्, अकृतकार्यमिति यावत्, अमन्यत = मेने। अग्रेगन्तुं समर्थोऽनाऽभूदितिभावः।

सर्षपग्पदाभिषेकं लब्ध्वाऽपि सर्षपो नभवतीति अपि शब्दः विरोधद्योतकः।

कृत्वापि बहुधा प्रयासमग्रेगन्तुमसमर्थत्वात् नाहं भैमीं लब्धुं समर्थो भविष्यामीति मत्वाति दुःखितोऽभूदिति विरोधपरिहारः। अत एवात्र विरोधाभासालङ्कारः। तथा च लक्षणम्-श्लेषादिभूर्विरोधश्चेद् विरोधाभासता मता।। इति।

**श्लोक २- प्राग्भूयकर्कोटक आचकर्ष -- चाश्वतरोऽन्वगच्छत्।।**

**सन्दर्भप्रसङ्गौ**-महाकविना श्रीहर्षेण प्रणीतस्य नैषधीय चरितस्य महाकाव्यस्य दशमसर्गादुद्धृतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् राजानः भैम्याः स्वयम्बरे गम्यमानाः सप्रावरणेषुहस्तिष्वारूढा आसन्। तेषामग्रे अश्वबलं बभूव पश्चाच्चाश्वतराणां बलम्। तेन प्रतीयते स्म यथा सकम्बलं नागबलं कर्कोटकः भुवस्तले कुण्डिनपुरं यातीति।

**अन्वयः**-भुवस्तले कुण्डिनगामिराज्ञां सकम्बलम् उच्चैः यत् नागबलम् प्राग्भूय कर्कोटकः आचकर्ष तत अश्वतरः अन्वगच्छत् वासुकेश्च।

**व्याख्या-** भुवस्तले = पृथिव्याम्, कुण्डिनगामिनाम् = कुण्डिनम् = कुण्डिनपुरम् भीमभूभुजो राजधानीम्, गच्छन्ति ये ते = कुण्डिनगामिनः तेषाम् = कुण्डिनगामिनाम् = दमयन्त्याः स्वयम्वरे गच्छतामिति यावत्। राज्ञाम् = नृपाणाम् यत् सकम्बलम् = सप्रावारम् समलङ्कृतमिति भावः उच्चैः = अत्युन्नतं नागबलम् = नागानाम् = हस्तिनाम्, बलम् = सैन्यम्, कर्कोटकः = अटतीत्यटकः शीघ्रंगन्ता, कर्काः = श्वेताश्वाः आचकर्ष = आङ्.समन्तात् कर्षति स्म।' करिसैन्यस्य पुरस्तात् पञ्चाश्वाः गच्छन्तीति सेनारीतिः।अथ च कर्कोटकः सर्पविशेषः प्राग्भूय = पुरस्ताद् भूत्वा, उच्चैः सकम्बलं = कम्बलाख्येन सर्पेण सहितम्, भुवस्तले = भुवः = पृथिव्या अधोभागे पातालस्थितं कुण्डिनगामि वासुकेः यन्नागबलं = सर्पबलमाचकर्ष = पातालतः कुण्डिनपुरमाचकर्ष = आनीतवान् अश्वतरनामा सर्पः तन्नागबलमन्वगच्छत्। सर्वं सर्पबलं वृद्धानुक्रमेण कुण्डिनमायातम्। सर्वेऽपि राजानः वासुकिप्रमुखाः सर्पाश्च स्वयम्बरार्थं ससैन्याः कुण्डिनपुरं समायाता इति भावः।

**कोशः**- कम्बलो नागभेदे स्यात् कुथ्यप्रावारयोरपि' इति विश्वः। अधः स्वरूपयोरस्त्री तलं स्यादित्यमरः।

**समास**- कर्कोटकः = अटतीति अटकः, कर्कश्चासौ अटकः =

कर्कोटकः। सकम्बलम् कम्बलेन सहितम् सकम्बलम् । नागबलम् = नागानां बलं नागबलम् । कुण्डिनगामिराज्ञाम् = कुण्डिनं गच्छन्ति ये राजानः तेषाम् = कुण्डिनगामिराज्ञाम् ।

**अलङ्कारादिकम्** - अत्र श्लेषालङ्कार इति साहित्यविद्याधरी। 'श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।' इति श्लेषलक्षणम् वैदर्भीरीतिः। प्रसादश्च गुणः। अत्रोभयोः करिनागबलयोः प्रकृतत्वात् केवलं प्रकृतिश्लेषः इति मल्लिनाथः।

**श्लोक ३- जातौ न वित्तेन गुणे ---------- स्त्रितरां कुबेरः।**

**सन्दर्भादिकम्**-महाकाविना श्रीहर्षेण प्रणीतस्य नैबधीयचरितमहाकाव्यस्य दशमात् सर्गादुद्धृतेऽस्मिञ्छ्लोके महाकविः वर्णयति यत् चत्वारस्तु दिगीशाः जग्मुः इन्द्रादिकाः भैम्याः स्वयम्बरे तां वरीतुकामाः। किन्तु कुबेरनामकः दिगीशो नहि तत्र जगाम स्वशरीरस्य कुत्सितत्वात्। कन्या चापि कामं वरयते सुन्दरशरीरवत्वात्। अतएव सा धनाधिपमपि मामवलोक्य कुरूपं नहि वरिष्यतीति मेने कुबेरः।

**अन्वयः**- कामः न जातौ, न वित्ते, न गुणे प्रवणः, सकामः सौन्दर्य एव, स्वच्छस्वशैलेक्षितकुत्सबेरः कुबेरः तां स्त्रितरां न प्रत्यगात्।

**व्याख्या**-कामः = कामदेवः, कुमार्याः अभिलाषश्च, जातौ = अभिजने, न = नास्ति प्रवणः = तत्परः, वित्ते = धने न = नास्ति प्रवणः, गुणे = श्रुतसौशील्यादिके चापि न = नास्ति प्रवणः, किन्तु सः कामः, वाभः = वक्रः सुन्दरश्च। अतएव हि भण्यते; 'कन्या वरयते रूपमिति। सः सौन्दर्ये = सुन्दरस्यभावः सौन्दर्यम् = सुन्दरतायामितिभावः, प्रवणः = तत्परो वर्त्तते। फलतोऽहं दमयन्त्याः कामविषयो न भवितुमर्हः। इति मत्त्वा स्वच्छस्वशैलेक्षितकुत्सवेरः = स्वच्छे = निर्मले, स्वशैले = स्वकीयनिवासभूते पर्वते, स्फटिकमणिमयत्वात् कैलासपर्वतस्य कुबेरनिवासभूतस्य, ईक्षितः = अवलोकितः कुत्सितम् = कुरूपम् कुबेरशरीरस्य, स्वित्रयुक्तत्वात्, सम्यगवगतस्वकौरूप्यः, कुबेरः = एतन्नामको दिगीशः उत्तरस्या आशायाः स्वामी, ताम् = भीमनन्दिनी दमयन्ती स्त्रीतराम् = अत्यन्तमनोज्ञाम्, रमणीयतरामिति भावः, अत्र स्त्रित्वंनाम पेशलत्वम्। तथाचोक्तमपि कुन्तकेन वक्रोक्तिजीविते। तां प्रति नहि अगात् = अगमत् कुबेरः।

**समासः** - स्वच्छस्वशैलेक्षितकुत्सवेरः = स्वच्छे, स्वस्य शैले ईक्षितम् कुत्सितं बेरं येनाऽसौ तथाभूतः।

**कोशः-** कुबेरस्त्र् यम्बकसखो यक्षराड्गुह्यकेश्वरः। इत्यमरः। कामः = स्मरेच्छाकाम्येषु। इतिहैमः। जातिः- जातिः सामान्यगोत्रयोः। मालत्यामामलक्यां च चुल्यां कम्पिल्यजन्मनोः।इति हैमः। वामः- वामः कामे पयोधरे उमानाथे प्रतिकूले चारौ। इति हैमः। प्रवणः- प्रवणस्तु क्षणे प्रह्वे कम्रनिम्ने चतुष्पथे। इति हैमः।

**अलङ्कारादिकम्-** अत्र काव्यलिङ्गदीपकालङ्कारः इति साहित्यिद्याधरी। वैदर्भीरीतिः प्रसादश्चगुणः।

**श्लोक ४- प्रयस्यतान्तद्भवितुं --------- कृत्रिममन्यदेव।।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिच्छ्लोके महाकविः वर्णयति यत्, इन्द्रादिकाः चत्त्वारो दिगीशाः 'भैमीनलमेव कामयते नहि तद्भिन्नं कमपि' इति नलमुखाज्ज्ञात्वा नलस्यैव रूपं कृत्वा परस्परमपृच्छन् यत् नलसदृशं मदीयं रूपं संजातं नवेति? किन्तु ज्ञात्वेदं यत् तेषां नलवेषकरणे क्वचित्त्रुटिस्संजातैव ते खिन्नमानसाः संजाताः।

**अन्वयः-** तद् भवितुं प्रयस्यतां सुराणं परस्परेण भ्रष्टेन पृष्टेन वत् तद्द्वैतसिद्धः न अनुमेने स्वाभाविकात् कृत्रिममन्यदेव।

**व्याख्या-** न सः असः! 'असः स भवितुं तद्भवितुम् = नलीभवितुम् तच्छब्दात् 'अभूततद्भावे च्विः' इति सूत्रेण च्विः प्रयस्यताम् = प्रयासं कुर्वताम्, सुराणाम् = देवानाम् तद्द्वैतम् = तस्मात् = नलात् द्वैतम् = द्वितीयताम् भिन्नतामिति भावः। द्वयोर्भावो द्विता, द्वितैव, द्वैतम् 'प्रज्ञादित्वात्' स्वार्थेऽण् प्रत्ययः। तस्मान्नलात् द्वितीयतायाः सिद्धिः = अत्यन्तसारूप्यासिद्धिः परस्परेण = अन्योन्येन दृष्टेन = अवलोकनेन, असौ नलेन सदृशः संजातो नवेति दर्शनेन, पृष्टेन = जिज्ञासितेन च, नानुमेने = अत्यधिकं प्रयस्यापि नलसादृश्यं नहि विभर्ति स्म वत् = इति खेदे। स्वाभाविकात् = नैसर्गिकात्, कृत्रिमम् = कृतकम् क्रियया निर्वृत्तमिति यावत् अन्यदेव = विलक्षणमेव भवति।

**समासः-** तद्भवितुम् = नसः असः, असः सः भवितुमिति तद्भवितुम्। तद्द्वैतम् = तस्माद् द्वैतम् = तद्द्वैतम्।

**कोशः-** सुराः = अमरानिर्जरादेवास्त्रिदशाः विवुधाः सुराः। इत्यमरः। वत = खेदानुकम्पासन्तोषविस्मयामन्त्रणे वत। इत्यमरः।

**अलङ्कारादिकम्**– अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। वैदर्भीरीतिः प्रसादश्च गुणः।

**श्लोक ५– तेषां तथालब्धुमनीश्वराणां ----- अनलाननत्वम्।**

**सन्दर्भादिकम्**–महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् वहुधा प्रयस्यापि देवाः नल सदृशमुखवन्तो नहि बभूवुः। देवानां 'अग्निमुखा हि देवाः' इति सूक्त्यनुसारेण-अनलाननत्वम् प्रख्यातम्। अतएव तेषामनलाननत्वं पुनरूक्तिदोषाय नहि सञ्जातम्, उभयोरपि शब्दयोः भिन्नतात्पर्यवत्त्वात्।

**अन्वयः**– तथा निजास्येन नलाननस्य श्रियं लब्धुम् अनीश्वराणां बर्हिर्मुखानां तेषाम् अनलाननत्वं पुनरूक्तिदोषं तरीतुम् अलं न ।

**व्याख्या**– तथा = तेन प्रकारेण, निजास्येन = निजं चेदमास्यम् निजास्यम् = स्वमुखं तेन प्रयोजनेन नलाननेन = नलस्य = निषधाधिपतेः, आननम् = मुखम्, तस्य, श्रियम् = शोभाम्, लब्धुम् = प्राप्तुम् अनीश्वराणाम् = अक्षमाणाम्, बर्हिर्मुखानाम् = अग्निमुखानाम्, देवानामित्यर्थः, 'अग्निमुखा वै देवाः।' इतिश्रुतेः। बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः।' इत्यमरः। 'वर्हिशुष्माकृष्णवर्त्मा' इति चामरः। तेषाम् = इन्द्रादीनाम्, अनलाननत्वम् = बहि्नमुखत्वम्, नलस्याननमिव आननं येषां ते नलाननाः इत्युपमानपूर्वपदो बहुब्रीहिः। ते न भवन्तीत्यनलाननाः तेषां भाव इत्यनलाननत्वम् नलाननतुल्याननराहित्यम्, पुनरूक्तिदोषः 'अग्निमुखा वै देवाः' इतिश्रुत्या तेषां वहि्नमुखत्वे पूर्वतः एव सिद्धेऽपि पुनर्वहि्न मुखत्वसम्पादनमिति पुनरुक्तिः। अथ च पूर्व नलरूपाप्राप्त्या नलाननतुल्याननराहित्ये सिद्धेऽपि पुनरलीकनलीभूत्वा चन्द्रादिनाऽपि नलसदृशाननत्वाप्राप्त्या अनलाननत्वमिति पुनरूक्तिरित्येतादृशपुनरूक्तिदोषमित्यर्थः तरीतुम् = परिहर्तुम्, नालम् = न समर्थः, न तु नलाननत्वसम्भावनापीत्यर्थः। द्वयोरप्यनलाननत्वयोभेदेऽपि श्लष्टैकपदोपादानमहिम्नैकत्वाभिमानात् पौनरूक्त्यव्यपदेशः।

**समासः**– निजास्येन = निजस्य आस्यम् निजास्यम् तेन। नलाननस्य = नलस्याननम् = नलाननम् तस्य। अनीश्वराणाम् = न ईश्वराः अनीश्वरा तेषाम्। अनलाननत्वम् = नलस्याननमिवाननं येषां ते नलाननाः। इत्युपमानपूर्वपदो बहुब्रीहिः। ते न भवन्तीत्यनलाननाः, तेषां भावस्तत्वम् = अनलाननत्वम्।

**कोशः**– आस्यम् = वक्त्रास्ये वदनं तुण्डम् आननं लपनं मुखम्'

इत्यमरः। श्रीः = श्री र्लक्ष्म्यां सरलद्रुमे। वेषोपकरणे वेषरचनायां मतौ गिरि। शोभा त्रिवर्गसम्पत्योः' इति हेमचन्द्रः।

**अलङ्कारादिकम्**-अत्र नलाननश्रीलिप्सूनां तेषां न केवलं तदलाभः प्रत्युतदुस्तरतरपुनरूक्तिदोषरूपानर्थोत्पत्तिश्चेति द्वितीयो विषमालङ्कारभेदः। विद्याधरानुसारेणात्र श्लेष अतिशयोक्तिश्च । बसन्ततिलकावृत्तम्।

**श्लोक ६- द्वीपान्तरेभ्यः पुटभेदनं -- स्मरेषुपक्षानिलतूललीला॥**

**सन्दर्भादिकम्**- महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्य दशमसर्गादुद्धृतेऽस्मिञ्छ्लोके महाकविः वर्णयति यत् कामविवशाः समे युवानो राजकुमाराः कुण्डिनपुरे दमयन्तीं स्वयम्बरे प्राप्तुं कामयामासुः।

**अन्वयः**- सुरभूमिपालैः द्वीपान्तरेभ्यः तत् पुरभेदनं क्षणात् अवापि केन यूना तत्कालं स्मरेषुपक्षानिलतूललीला न अलम्भि?

**व्याख्या**-सुरभूमिपालैः = सुराश्च = देवाश्च, भूमिपालाश्च = नृपतयश्च तैः = सुरभूमिपालैः, अथवा सुरभूमयः देवभूमयः द्वीपान्तरलक्षणाः, द्वीपान्तराणि देवानां भोगभूमयः इति पुराणेषु प्रसिद्धम्, तान् पालयन्ति = रक्षन्ति ये ते तैः राजभिः, द्वीपान्तरेभ्यः = अन्येभ्यो द्वीपेभ्यः, ततः पुरभेदनम् = प्रख्यात कुण्डिनपुरम्, क्षणात् = अतिशीघ्रम् अवापि = प्राप्तम्। तथाहि केन यूना = केन युवकेन, तत्कालम् = तस्मिन् दमयन्ति स्वयम्बरावसरे, स्मरेषुपक्षानिलतूललीला = स्मरस्य = कामस्य, ये इषवः बाणाः, तेषां पक्षानिलेन = पक्षवायु तूलस्य = कार्पासस्य, लीला इव लीला = विलासः, न = नहि, अलम्भि = प्राप्तः कामप्रेरिताः सर्वे युवानः द्वीपन्तरेभ्य अपि दमयन्त्याः स्वयम्बरावसरे तत्राजग्मुरिति भावः।

**समासः**-सुरभूमिपालैः = सुराश्च भूमिपालाश्च तैः। स्मरेषुपक्षानिलतूललीला = स्मरस्य ये इषवः तेषां पक्षाणां अनिलेन, तूलस्य लीला इव लीला।

**कोशः**- सुरः = अमरा निर्जरा देवाः त्रिदशा विबुधाःसुराः।' इत्यमरः। स्मरः = कामः पञ्चशरः स्मरः। इत्यमरः । इषुः = कलम्बमार्गणशराः पत्रीकोष इषुर्द्वयोः। इत्यमरः। अनिलः = पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः इत्यमरः

**अलङ्कारादिकम्**-अत्राखिलयूनां कामुकत्वेन कुण्डिनपुर प्राप्तिरूपकार्यस्य द्वीपान्तरस्थभूपानां झटिति कुण्डिनप्राप्ति रूपकार्थसमर्थनरूपोऽर्थान्तरन्यासः सतूललीलेति निदर्शनासंकीर्णा। वैदर्भीरीतिः। प्रसादश्च गुणः।

**श्लोक ७- अस्वेदगात्राचल ------------- भिदां न भेजुः।।**

**सन्दर्भादिकम्**-महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितंस्य महाकाव्यस्य दशमात् सर्गाद् गृहीतेऽस्मिञ्छ्लोके महाकविः वर्णयति यत् तस्यां दमयन्त्याः स्वयम्वरसभायां यद्यपि देवाः मुनुष्याश्चोभये समुपस्थिता आसन् अथापि तेषु कश्चनापि भेदो नहि प्रतीयते स्म। देवाः स्वभावत एवास्वेदागात्राः अम्लानमालाः निर्निमेषनयनाश्चासन् नरदेवाश्च चलच्चमरवायुना विगलितस्वेदाः, विस्तृतच्छत्र च्छाययाम्लानछमालाः अद्भुतवस्तुविलोकनजन्याश्चर्यचकितत्वान्निर्निमेषनयनाश्चाभूवन्।

**अन्वयः**-चलचामरौघैः अस्वेदगात्राः प्रतिवस्तुचित्रैः अमीलनेत्राः विपुलातपत्रैः अम्लानमालाः देवाः नृदेवाश्च भिदां न भेजुः।

**व्याख्या**- चलानाम् = वीज्यमानत्वात् चञ्चलानां चामराणाम् ओघैः = समूहैः, चलचामरौघैः करणैः, अस्वेदगात्राः = अस्वेदानि = शुष्कघर्मोद्विन्दुत्वात् स्वेदरहितानि, गात्राणि = अङ्गानियेषां ते तथाभूताः। प्रतिवस्तुचित्रैः = वस्तूनि वस्तूनि प्रतिवस्तु , वीप्सायामव्ययीभावः। चित्रैः = आश्चर्यैः उपलक्षिताः, अमीलनेत्राः मीला मीलकाः। 'गुरोश्च हलः' इति स्त्रियांप्रत्यये टाप्, तद्गृहीतानि, अमीलानि = निर्निमेषाणि, नेत्राणि येषां ते तथाभूताः। अथवा न मीलन्तीत्यमीलानि नेत्राणि येषां ते तथाभूताः। विपुलातपत्रैः = विपुलानि यान्यातपत्राणि तैः = विस्तृतच्छत्रैः, अम्लानमालाः = नम्लानमम्लानम्, तेन रहिताः मालाः स्त्रजो येषां ते तथाभूताः। देवाः = सुराः, नृदेवाः = राजानश्च भिदाम् = भेदम्, न भेजुः = प्रापुः।

देवपक्षे सर्वत्र उपलक्षणे तृतीया, राजपक्षे च हेतौ तृतीया। देवानां स्वेदाभावस्य स्वाभाविकत्वात् चामरौघादीनामुपलक्षितत्वं राज्ञां च स्वेदाद्यभावश्च स्वाभाविकत्वात् चामरौघादीनां तत्साधनत्वम्।

**समासः**- चलचामरौघैः चलानि यानि चामराणि तेषामोघैः = चलचामरौघैः। अस्वेदगात्राः अस्वेदानि गात्राणि येषां ते तथाभूताः।

**अमीलनेत्राः**- न मीलन्तीत्यमीलानि, अमीलानि नेत्राणि येषां ते तथाभूताः। विपुलातपत्रैः = विपुलानि आतपतत्राणि यानि तैः = विपुलातपत्रैः अम्लानमालाः = न म्लाना अम्लानाः तथाभूताः माला येषां ते अम्लानमालाः।

**कोशः**- चित्रम् = विस्मयोद्भुतमाश्चर्यं चित्रम्।' इत्यमरः देवः = अमरानिर्जरादेवास्त्रिदशा विबुधाः सुराः। इत्यमरः।

**अलङ्कारादिकम्**- अस्मिन् पद्ये बसन्ततिलकावृत्तम्! 'ज्ञेया वसन्ततिलका

तभजा जगौ गः।' इति हि वसन्ततिलकायाः लक्षणम्।

अस्वेदगात्रादिपदार्थानां विशेषणगत्या देवभेदाभाव हेतुत्वात् पदार्थहेतुकं काव्यालिङ्गमलङ्कारः। अस्मिञ्छ्लोकेऽतिशयोक्तिनामकोऽलङ्कार इति साहित्यविद्याधरीकारः।

**श्लोक ८- सुधांशुरेष प्रथमो भुवीति ---- मत्सरिणो निनिन्दुः॥**

**सन्दर्भादिकम्-** महाकविश्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् दमयन्त्याः स्वयम्बरसभायां यदा नलः समागात् तदा तत्रोपस्थिताः समे मत्सरिणो राजानः तस्य निन्दायाः व्याजेन स्तुतिमकार्षुः। ते प्राहुः किमयं पृथिव्याः प्रथमः चन्द्रः? अथवा द्वितीयः कामः? अथवा तृतीयोऽश्विनीकुमारः?

**अन्वयः-** भुवि एषः प्रथमः सुधंशुः किम्? असौ द्वितीयः स्मरः किम्? अथ तृतीयो दस्रः किम? इति मत्सरिणः क्षितीशाः इमं स्तुतिच्छलात् निनिन्दुः।

**व्याख्या-** अत्र प्रश्नार्थस्यकाक्वर्थस्य किमः प्रत्येकं संबन्धः। भुवि = पृथिव्याम्, एषः = अयम्, अस्माकं पुरः सभायामुपविष्टः नलाभिधानः प्रथमः = नूतनतयावतीर्णः सुधांशुः = चन्द्रः किम्? असौ = नलाभिधानः पुरुषः द्वितीयः = अपरः प्रसिद्धकामदेवव्यतिरिक्तः नवीनः = नूतनतया पृथिव्यामवतीर्णः, स्मरः = कामदेवः किम्? तथा भुवि अयं तृतीयः = प्रसिद्धयोरश्विनीकुमारयोः भिन्नः दस्रः = नासत्यः किम्? इति = इत्यनेन प्रकारेण, मत्सरिणः = ईर्ष्यासमन्विताः, क्षितीशाः = राजानः केचन, स्तुतिच्छलात् = प्रशंसायाः व्याजेन, आपाततः प्रतीयमानेन प्रशंसनेन इमम् = एनम् नलम्, निनिन्दुः = निन्दतमकार्षुः।

**समासः** -स्तुतिच्छलात् = स्तुतेः छलात् = स्तुतिच्छलात्।

**कोशः-** दस्रः = नासत्यस्नावश्विनौ दस्रः इत्यमरः। मत्सरः = मत्सरोन्यशुभद्वेषे।' इत्यमरः।

**छन्दोऽलङ्कारादिकम्-**'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलका वृत्तम्। अत्रापह्नुति सदेहालङ्कारौ इति साहित्य विधाधरी। वैदर्भीरीतिः प्रसादगुणश्च।

**श्लोक ९- तेभ्यः परान्नः परिभावयस्व ----- घटिष्यते सा॥**

**सन्दर्भप्रसङ्गादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरित महाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् दमयन्त्याः स्वयम्बर

सभायामुपविष्टो नलः स्वसमक्षम् समुपविष्टान् कृत्रिमान् नलान् इन्द्रादिकानवेक्ष्य अप्राक्षीत् यत् के यूयम् इति। तच्छ्रुत्वा तेऽवादिषुः यत् कामादिकानपि देवान् तिरस्कुर्वाणो वयम् तेभ्योऽपि व्यतिरिक्ताः। संभवितुमर्हति यत् कदाचित् भीमसुताऽप्यत्रभ्रमन्ती अस्मान्नेव वरयेत्।

**अन्वयः-** श्रिया विदूरीकृतकामदेवान् नः तेभ्यः परान् परिभावयस्व अस्मिन् समाजे भ्रमन्ती असौ भैमी किल अस्मासु घटिष्यते।

**व्याख्या-** पूर्वश्लोकस्य यच्छब्दापेक्षया तदोव्यवहारः। तत् = तस्मा दिलाद्यभावात्, श्रिया = सौन्दर्येण, विदूरीकृतकामदेवान् विदूरीकृतः = अधरीकृतः कामदेवो यैस्तान् = न्यक्कृतमन्मथान्, नः = अस्मान् तेभ्यः = ऐलादिभ्यः परान् = भिन्नान्, परिभावयस्व = अवेहि। किञ्च श्रिया विदूरीकृत कामदेवान् नः तेभ्यः = कामदेवादिभ्यः, परान् = भिन्नान् उत्कृष्टानिति यावत्, परिभावयस्व = जानीहि। अस्मिन् = एतस्मिन् समाजे = राज्ञां समूहे, बहुषु = अनेकेषु नलरूपेणोपविष्टेषु। भ्रमन्ती = भ्रमणं कुर्वन्ती, भ्रमाविष्टा भवन्ती वा एतेषु पञ्चसु विद्यमानेषु नलेषु वास्तविको = नलः कः, इति भ्रांतिं कुर्वन्ती असौ = सा प्रख्याता भैमी = भीमस्य राज्ञ अपत्यं स्त्री, दमयन्ती, अस्मासु = अत्र विद्यमानेषु नलरूपधरेषु इन्द्रादिषु देवेषु, घटिष्यते = सङ्गमिष्यते, किलेति सम्भावनभ्याम्।

**समास-** विदूरीकृतकामदेवान् = विदूरीकृतः कामदेवो यैः तान् = विदूरीकृतकामदेवान्।

**कोश-** परः = परोदूरान्यश्रेष्ठशत्रुषु। इति हैमः। श्रीः = श्रीर्लक्ष्म्यां सरलद्रुमे। वेषोपकरणे वेषरचनायां मतौ गिरिं। शोभा = शोभा त्रिवर्गसम्पत्योः। इति हैमः।

**छन्दोलङ्कारादिकम्-**'ज्ञेया वसन्ततिलकासभजा जगौ गः' इति लक्षणनुसारेणात्र वसन्ततिलकावृत्तम्। अत्रार्थद्वयस्यापि विवक्षितत्वात् केवलप्रकृतिश्लेषः इति मल्लिनाथः। अत्रातिशयोक्त्यलङ्क.ारः इति साहित्यविद्याधरीकारः।

**श्लोक १०- अष्टौ तदाऽष्टासुहरित्सु --------- केतकीकः।।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीय चरितमहाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिंच्छ्लोके महाकविर्वर्णयति यत् कदाचित् शिवलिङ्ग. स्योपरिभागस्यान्वेषणे रतः तस्यान्तमगत्वापि यो ब्रह्मा दृष्टा मया शिवशिरसः शोभेति उक्त्वा केतकीमपि मृषावादिनीं चकार, स एव ब्रह्मा दमयन्त्याः

स्वयम्बरशोभादिदृक्षया समागतः सन् जनसमूह स्यान्तमवजिगमिषया स्वाष्टौ दृष्टीः दशसु दिक्षु नियोजयामास कौतूहलपरतन्त्रान्तःकरणः।

**अन्वय-** यः लैङ्गीम् शिरः श्रियम् अदृष्ट्वा अपि मृषावादितकेतकीकः सदः दिदृक्षुः देवः तदा अष्टासु हरित्सु अष्टौ दृष्टीः निदिदेश।।

**व्याख्या-** यः = देवो ब्रह्मा, लैङ्गीम् = लिङ्गसम्बन्धिनीम् ज्योतिर्लिङ्गस्येति यावत् शिरःश्रियम् = लिङ्गस्योत्तरावधिम्, अदृष्ट्वा अपि = अनवलोक्यापि, दृष्टौ = लिङ्गशिरो दर्शनविषये मृषावादितकेतकीकः = मृषावादिनी सा कृता मृषावादिता = मृषावदिनीकृतेत्यर्थः। मृषावादि शब्दात् तत्करोतीति ण्यन्तात् कर्मणि क्तः। पुंवदभावटिलोपाद्यार्थ णिनिष्ठवद् भावोपसंख्यानाट्टिलोपः केतकी येन सः = कूटसाक्षीकृतकेतकी कुसुमः। सदः = स्वयम्बरसभां, दिदृक्षुः अवलोकनेप्सुः, देवः = ब्रह्मा, तदा = दमयन्ती स्वयम्बरावसरे, अष्टासु = अष्टासंख्याकासु, हरित्सु = दिशासु, दृष्टीः = नेत्राणि निदिदेश = प्रेरयामास।

**समासः-** शिरःश्रियम् = शिरसः श्री शिरः श्रीः ताम् = शिरःश्रियम्। मृषावादितकेतकीकः मृषावादिताकेतकीयेनाऽसौ ताथाभूताकः = मृषावादित केतकीकः।

**कोशः-** = मृषा- मृषा मिथ्या च वितथे' इत्यमरः। लिङ्गम् = लिङ्गमेहनचिह्नयोः। शिवमूर्तावनुमाने सारूपोक्तप्रकृतावपि।।

**महरित्-** दिशस्तुककुभः काष्ठा आशाश्चहरितश्च ताः। इत्यमरः।

**छन्दोलङ्कारादिकम्-**'ज्ञेया वसन्ततिलका तभजा जगौ गः,' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अत्रानुप्रासोऽलङ्कार इति साहित्यविद्याधरीकारः।

**श्लोक ११- कुलञ्चशीलञ्च बलञ्च ------ समयस्तवायम्।।**

**सन्दर्भादिकम्-**महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकवि वर्णयति यत् दमयन्त्या स्वयम्बरसभायामागतान् समग्रान् राज्ञो विलोक्य राजा भीमः कुण्डिनपुराधीशः भगवन्तं विष्णुं प्रार्थयामास। भगवता विष्णुनाभिहिताऽभूत् सरस्वती देवी यत् त्वम् नानालोकेभ्यः समागतान् सर्वान् राज्ञो वेत्सि । अतएव त्वमेव एतेषां समेषां राज्ञां वंश-शील-स्वभाव-शीलादिकञ्च वक्तुं क्षमा। अतएव त्वमेवैतेषां प्रभावादिकं वर्णय।

**अन्वयः-** त्वं नानाभुवनागतानां राज्ञां कुलं च शीलं च बलं च जानासि; अतः एषां वावदूका भव। तव मूकायितुं अयं कः समयः?

**व्याख्या-** अत्र भगवान् विष्णुर्वक्ति भगवती सरस्वतीम्, हे सरस्वति!, त्वम् = सरस्वती एव, नानाभुवनागतानाम् = नानाभ्यः = अनेकेभ्यः भुवनेभ्यः = लोकेभ्यः, आगतानाम् = अत्रसमागतानाम्, राज्ञाम् = नृपाणाम् कुलम् = वंशम्, शीलञ्च = सौशीलयौदार्यादिकञ्चगुणजातम् बलम् = सामर्थ्यम्, सैन्यञ्च, जानासि = वेत्सि, अतः = अतएव त्वमेव, एषाम् = समागतानां राज्ञां शीलस्वभावबलादिकानाम्, वावूदका = प्रवक्त्री, भव तव = सरस्वत्याः, मूकायितुम = मौनालम्बनकर्तुम्, अयम् = एषः, कः समयः? अयं ते मौनालम्बनस्य सर्वथा नास्त्युचितः काल इति भावः। अत एव त्वमेवैतेषाम् समुचितपरिचयप्रदात्री भव।

**समासः-** नानाभुवनागतानाम् = नानाभ्यो भुवनेभ्य आगतानाम् = नानाभुवनागतानाम्।

**कोश-** राजा-राजा राट् पार्थिवक्ष्माभृत् नृपभूपमहीक्षितः। राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः।। इत्यमरः। कुलम्- सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानो। इत्यमरः। बलम् = बलं रूपेस्थेमनि स्थौल्यसैन्ययोः। इति हैमः।। समयः-समयः शपथे भाषा सम्पदोः कालसंविदोः। सिद्धान्ताचारसंकेत नियमावसरेषु च। इति हैमः।

**छन्दोलङ्कारादिकम्-** 'ज्ञेया वसन्ततिलका तभजा जगौः; इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम् ।वाग्मिनामवसरे तुष्णीम्भावो न युज्यते इति अर्थान्तरन्यासालङ्कार इति मल्लिनाथः।अत्र छेकानुप्रासकाव्यलिङ्ग.लङ्क.ार इति। साहित्यविद्याधरीकारः। वैदर्भीरीतिः प्रसादश्चगुणः।

**श्लोक १२- मध्येसभं साऽवततार बाला --------- दृतरङ्ग ।।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरित महाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविः वर्णयति यत् भगवतो विष्णोर्वचनं श्रुत्वा सरस्वती दमयन्ती स्वयम्बरसभायां बालारूपेणावतीर्णा बभूव। गानविद्यायां प्रवीणायास्तस्याः कण्ठनालमेव गान्धर्वविद्याया आश्रयः रूपेण त्रिवल्येव च त्रय्याः आश्रयरूपेण प्रतीयते स्म।

**अन्वयः-** गन्धर्वविद्यामयकण्ठनाला त्रयीमयीभूतबलीविभङ्गा साहित्यनिर्वर्तितदृक्तरङ्गा सा बाला मध्ये सभं अवततार।

**व्याख्या-** गन्धर्वविद्याधरकण्ठनाला = गन्धर्वविद्यायाः = गान विद्यायाः, धरः = आश्रयः, कण्ठस्य नालो यस्याः सा = गन्धर्वविद्याधरकण्ठनाला =

गानविद्या प्रवीणकण्ठनालवती। कठस्यनालत्व कथनेनैव मुखस्य पदमत्व सिद्धम्। त्रयीमयीभूतबली विभङ्ग.ा = ऋक्सामयजुरूपत्रिसंख्यामयः त्रयीमयः त्रयीमयीभूता बलीविभङ्गो बलीरचना यस्याः सा तथाभूता साहित्यनिर्वर्तित दृक्तरङ्ग.ा = महाकाव्यनाटकचम्पूप्रभृति अथवा शुक्ल नीलरक्तवर्णसाहित्येन मेलनेन वा निर्वर्तिता निर्मिता अतिसलक्षणा दृक्तरङ्गाः = कटाक्षविक्षेपाः यस्याः सा एतादृशी सा = प्रख्याता वाग्देवता मध्ये सभम् = सभायाः मध्ये मध्ये सभम् बाला = बालस्त्रीरूपधृतशरीरवती सरस्वती अवततार = अवतीर्णा बभूवा। राज्ञां परिचयमुपस्थापयितुम्।

**समासः**-मध्येसभम् = सभायाः मध्ये = मध्येसभम् गन्धर्वविद्याधरकण्ठनाला = गन्धर्वाणां विद्या गन्धर्वविद्या, तस्याः धरः कण्ठनालो यस्याः सा = गन्धर्वविद्याधरकण्ठनाला। त्रयीमयीभूतवलीविभङ्गा = त्रयीमयीभूताः बल्या विभङ्गोयस्याः सा। साहित्यनिर्वर्तितदृक्तरङ्गा = साहित्येन निर्वर्त्तितो दृशोः तरङ्ग.ा यस्याः सा।

**कोशः** - बाला- बालाबाम इत्यमरः।

**छन्दोलङ्क.ारादिकम्**- 'ज्ञेया वसन्तलिका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलका वृत्तम्। अत्रातिशयोक्तिरलङ्क.ार इति साहित्यविद्याधरी।

**श्लोक १३- स्थितैव कण्ठे परिणम्य ------- भूताविशङ्के।**

**सन्दर्भादिकम्**- महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविः अनेकार्थकानां शब्दानां प्रयोगेण साधयति यत् सरस्त्वत्याः दमयन्त्याः स्वयम्बरस्य मध्ये बालारूपेणावतीर्णायाः कण्ठे विद्यमाना देदीप्यमाना हारलता ज्योतिःशास्त्रस्वरूपा आसीत्।

**अन्वयः**- उदिततारवृत्ता मध्येऽङ्गम् अङ्केनभृता ज्योतिर्मयी विद्या एव परिणम्य विशङ्के. यद्भजनाय कण्ठे स्थिता हारलता बभूव।

**व्याख्या**- उदिततारवृत्ता उदितम् = उक्तम्, तारम् = तारासम्बन्धिवृत्तम् = शुभशुभफलकथनरूपं यस्यां सा = उदिततारवृत्ता, मध्येऽङ्गम् = अङ्गानाम् = वेदाङ्गानाम् शिक्षादिकानाम् मध्ये, अङ्केन = गणनया, भृता = धृता षडङ्गमध्ये परिगणितेत्यर्थः। हारलताऽपि उदितः = प्रकाशभूतः तारो = मध्यमणिर्यस्यां, मुक्ताशुद्धिर्वा यस्याम् सा एवं भूता चासौ वृत्ता च वर्तुलमौक्तिकेत्यर्थः, तथा मध्येऽङ्गम् = शरीरमध्ये, अङ्केन = क्रोडेन, वक्षसा भृता = धृता, ज्योतिर्मयी = ज्योती रूपा, ग्रहनक्षत्रादिचारसहिता विद्या,

यद्भजनाय = यस्याः देव्याः सेवनाय कण्ठे स्थितैव परिणम्य = रूपान्तरं प्राप्य हारलता बभूवेत्यहं विशङ्के।

**समासः–** उदिततारवृत्ता = उदितम् तारं वृत्तं यस्यां सा = उदिततारवृत्ता। मध्येऽङ्गम् = अङ्गानाम् मध्ये = मध्येऽङ्गम्। यद्भजनाय = यस्याः भजनाय = यद्भजनाय।

**कोशः–** कण्ठः-कण्ठो ध्वनौ सन्निधाने ग्रीवायां मदनद्रुमे। इति हैमः। अङ्गम्-अङ्गमन्तिकगात्रयोः। उपसर्जनभूते स्यादभ्युपाय प्रतीकयोः। इति हैमः। अङ्कः = अङ्कोभूषा रूपकलक्ष्मसाचित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकगात्रयोः इति हैमः।

**छन्दोलङ्कारादिकम्–** अस्मिञ्छ्लोके 'ज्ञेया वसन्ततिलका तभजा जगौ गः।' इतिलक्षणानुसारेण वसन्ततिलकावृत्तम् अत्रोत्प्रेक्षालङ्कार इति साहित्य विद्याधरीकारः।

**श्लोकः १४– उद्देशपर्वण्यपि लक्षणेऽपि ------------ प्रतीमः।**

**सन्दर्भादिकम्–** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीय चरितमहाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविः सरस्वत्याः दमयन्त्याः स्वयम्बरसभायामवतीर्णायाः वर्णनं कुर्वन् वक्ति यत् षोड्श संख्यात्वेन परिगणिताः न्यायशास्त्रीयाः पदार्था एव उद्देशतो लक्षणतश्च द्विगुणिताः भूत्वा सरस्वत्याः द्वात्रिंशत् संख्याकाः दन्ता अभूवन्।

**अन्वयः–** यद् दशनद्विमालीम् उद्देशपर्वणि अपि लक्षणे अपि द्विधोदितैः षोडशभिः पदार्थैः मुक्तिकामाकलितां ताम् आन्विक्षिकीम् प्रतीमः।।

**व्याख्या**–यद् दशनद्विमालीम् = यस्याः = सरस्वत्याः दशनानाम् = दन्तानाम्, द्विमालीम् = पंक्तिद्वयीम्, उद्देशपर्वणि = नाम्ना पदार्थकीर्तनमुद्देशः इति ह्युक्तमुद्देशलक्षणम् तस्य पर्वणि अवसरेऽपि, लक्षणेऽपि = समानासमानजातीयेव्यवच्छेदोलक्षणम् तस्मिन्नपि द्विधा = उद्देशतयालक्षणतया च उदितैः = षोडशसंख्याकैः, पदार्थैः = प्रमाणदिभिः निग्रहस्थान पर्यन्तैः। मुक्तिकामाकलिताम् = मुक्त्यवाप्तेः कामना येषां ते मुक्तिकामाः तैः एतेषां षोडशसंख्याकानामभ्यासेन मुक्तिरवाप्यते इति मन्यमानैः आकलिताम् = अभ्यस्ताम् ताम् = प्रख्यातां आन्विक्षिकीम् = आन्विक्षिकीं विद्याम्, प्रतीमः = जानीमो वयमिति शेषः। अनु = पुनः पुनरीक्षणं प्रयोजनं यस्याः इति आन्विक्षिकी । तथा लक्षणेऽपि = सामुद्रिकशास्त्रेऽपि उदिता = उक्ता।

**समासः-** उद्देशपर्वणि = उद्देशस्य पर्वणि उद्देशपर्वणि। यद् दशनद्विमालीम् = यस्याः दशनानां द्विमालीम् = यद्दशनद्विमालीम्। मुक्तिकामाकलिताम् = मुक्तेः कामना येषां ते मुक्तिकामाः तैः आकलिताम् = मुक्तिकामाकलिताम्।

**कोशः -** दशनाः = रदना दशना दन्तारदाः इत्यमरः।

**छन्दोलङ्कादिकम्-** अस्मिञ्छ्लोके 'ज्ञेया वसन्ततिलका तभजा जगौ गः।' इति लक्षणानुसारेण वसन्ततिलकावृत्तम् अत्रोत्प्रेक्षाश्लेषालङ्कारौ इति साहित्यविद्याधरीकारः। वैदर्भीरीति : प्रसादश्चगुणः।

**श्लोक १५- तर्कारदरा यद्वदनस्य ---------- प्रभुत्वम्।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरित महाकाव्यस्य दशमात् सर्गात् परिगृहीतेऽस्मिञ्छ्लोके महाकविः दमयन्त्याः स्वयम्बरसभायामवतीर्णायाः सरस्वत्याः वर्णनं कुर्वन् वक्ति यत् तर्कशास्त्रमेव सरस्वत्या मुखे दंतरूपेणावस्थितमास्ते। अन्यथा तथाविधायाः भाषणशक्तेः शास्त्रार्थशक्तेर्वा तयो रुच्चारणशक्तेश्च सर्वथा अभावः स्यात्। सरस्वती दन्तानां तर्कशास्त्र स्वरूपादेव विदुषामपि पराजितकरणशक्तिः ताम्बूलादीनामपि चर्वणशक्तिः दन्तेष्वायाति।

**अन्वयः-** तर्काः यद्वदनस्य रदाः तर्क्याः तैः अन्यथा अस्य वादे तथा शक्तिःक्व पत्रं दातुं क्व, वादतः गुणशालिपूगं प्रभुत्वं खण्डयितुं क्व।

**व्याख्या-** अत्रापि कविः एतस्मात् पूर्वश्लोकमिव दन्तानां तर्कत्वमुत्प्रेक्षते।। यद्ययं निर्वह्निः स्यात्तदाऽयं निर्धूमोऽपि स्यादित्यादिप्रकारकाः तर्काः यद्वदनस्य = यस्याः = सरस्वत्याः वदनस्य = मुखस्य = दन्ताः तर्क्याः = तर्केण द्वारा निश्चेतव्याः। तैः = दद्भिः, अन्यथा = तेषां तर्कत्वाऽभावे यदि दन्ताः तर्काः नाभविष्यंस्तर्हि, अस्य मुखस्य, वादे = वादाभिख्ये कथाविशेषे 'तत्त्वजिज्ञासया विजिगीषां विनैव वादिप्रातिवादिभ्यां तत्त्वनिर्णयाय प्रवर्तिता कथा वादः। अथवा वादे = भाषणे, तथा शक्तिः = विदुषामवलोक्यमानाशक्ति, क्व = कुतः आगच्छेत्। तस्मात्तर्का एव रदाः। अथ च वा च दश्च वादम् 'सर्वो द्वन्द्वः इत्येकवद्भावः। वकारदकारयोः उच्चारणस्य शक्तिः कुतो भवेन्मुखे दन्तानां तर्कत्वं विना। वकारस्यदन्त्योष्ठ्यत्वात् दकारस्दन्त्यत्वात्। किञ्च वादतो वादनिमित्ताद प्रतिवादिने पत्त्रं प्रतिपत्रं दातुं = खण्डयितुम् तदुपरिपत्रालम्बनं कर्तुं प्रतिवादिनः प्रतिज्ञापत्रंदातुम् = खण्डयितुम्। अथ च अदतः = भक्षयतोऽस्य कटुरसत्वादिगुणशालिपत्रं खण्डयितुम् = चर्वयितुम् प्रभुत्वं = सामर्थ्यं वा कुतः

स्यात्। नैवभवेदिति भावः। अतएव दन्तानां तर्कत्वं स्वीकरणीयमिति भावः।

**समासः** यद्वदनस्य = यस्या वदनस्य = यद्वदनस्य वादम् = वा च दश्च = वादम् 'सर्वोद्वन्द्वः इत्येकवद्भावः। गुणशालिपूगम् = गुणेनशालते यत् तथाविधम् पूगम् = गुणशालिपूगम्।

**कोशः**– रदनो दशनाः दन्ताः रदाः' इत्यमरः। शक्तिः = शक्तिः पराक्रमः प्राणः। इत्यमरः।

**छन्दोलङ्कारादिकम्**– अस्मिञ्छ्लोके 'ज्ञेया वसन्ततिलका तभजा जगौ गः।' इति लक्षणानुसारेण वसन्ततिलकावृत्तम्। अत्रोत्प्रेक्षाश्लेषालङ्कारः इति साहित्यविद्याधरी।

**श्लोक १६– या सोमसिद्धान्तमयाननेव ----------- मयाखिलेव।।**

**सन्दर्भादिकम्**– महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् परिगृहीतेऽस्मिञ्छ्लोके महाकविः श्रीहर्षो वर्णयति भगवतो विष्णोरादेशात् भुवनान्तरागतानां नृपाणां स्वाभावादिकं वर्णयितुम् दमयन्त्याः स्वयम्बरसभायामवतीर्णायाः सरस्वत्याः वर्णनप्रसङ्गेन यत् कापालिक दर्शनमयमस्यास्सरस्वत्याः मुखमास्ते तस्य पूर्णचन्द्र तुल्यत्वात् तस्या परमात्यन्तं कृशं वर्त्तते, चितञ्च ज्ञानमयमास्ते। अस्याः सरस्वत्याः स्वरूपस्य संबन्धो भवति सोमसिद्धान्तापरपर्यायभूतेन कापालिकसिद्धान्तेन, चतुष्प्रकारकेण बौद्धदर्शनेन च। सरस्वत्याः कल्पनमेव सकलानां शास्त्राणां ज्ञानमूर्तिस्वरूपमास्ते।

**अन्वयः**– या सोमसिद्धान्तमयानना इव शून्यात्मतावादमयोदरा इव विज्ञानसामस्त्यमयान्तरा इव साकारतोःसिद्धिमयाखिला इव अवततार।

**व्याख्या**– या = सरस्वती, सोमसिद्धान्तमयाननेव = सोमसिद्धान्तः = कापालिकदर्शनम्, तन्मयम् = तद्रूपम् अथ च चन्द्रस्य याथर्थ्यम् पूर्वपक्षभूतस्य पूर्णिमाजातस्य वा चन्द्रस्य सिद्धान्तरूपम् = दूषकररुपमाननं यस्या एवं भूतेन। तथा शून्यत्मतावादो = मार्ध्यमिकमतम् तन्मयं तद्रूपमुदरं यस्याः सैव। आत्मनो न संन्तीति शून्यात्मतावादो बौद्धसिद्धान्तः। तथा विज्ञानस्य = विशिष्टज्ञानस्य सामस्त्यं संपूर्णत्वम् तन्मयम् = तत्प्रचुरं आन्तरं चित्तं यस्य एवमेव तथा सा का विज्ञानवादी सौत्रान्तिकः। अथ च सौन्दर्यलाभप्रचुरम्, अखिलं समस्तं रूपं यस्या एवं भूतेव। सोमसिद्धान्तादिदर्शनैर्यदीयाः मुखाद्यवयवाः निर्मिताः। चन्द्रानना, अतिकृशोदरी सर्वविज्ञानमयी, अतिसुन्दरीचेति भावः।

**समासः**– सोमसिद्धान्तमयानना सोमसिद्धान्तः तेन मयं आननं यस्याः सा

= सोमसिद्धान्तमयानना सा इव = सोमसिद्धान्तमयाननेव। शून्यात्मतावादमयोदरेव = शून्या आत्मानः = शून्यात्मानः, तस्यभावस्तत्ता शून्यात्मता तस्य वादः = शून्यात्मतावादः, तेनमयमुदरं यस्याः सा = शून्यात्मतावादमयोदरा, तदिव शून्यात्मतवादमयोदरेव।। विज्ञानसोमस्त्यमयान्तरा = विज्ञानस्य सामस्त्यं तन्मयं आन्तरं यस्या एवं भूतेव।। साकरतासिद्धिमयाखिलेव = आकारेणसहितम् साकारम् तस्य भावस्तत्ता साकारता तस्यासिद्धिः तन्मयम् अखिला इव साकारतासिद्धिमयाखिलेव।

**छन्दोलङ्कारादिकम्**-'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अत्रोत्प्रेक्षालङ्कार इति साहित्यविद्याधरी।

**श्लोक १७- स्निग्धत्वमायाबललेप -------- निजालिजालम्।**

**सन्दर्भादिकम्**- अयं श्लोको महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् गृहीतो वर्त्तते। अस्मिञ्छ्लोके महाकविः स्वयम्बरसभायां समागतायाः दमयन्त्याः सौन्दर्यातिशयवर्णनस्य प्रसङ्गेन वर्णयति यत् तस्याः भैम्याः वस्त्राणि निर्दोषरत्नादति निर्मलान्यासन्, किञ्च सा स्वसदृशयवतीनां युवतीनां मध्ये विद्यमानासीदिति।

**अन्वयः**- स्निग्धत्वमायाजललेपलोपसयत्नरत्नांशुमृजांशुकाभाम्, नेपथ्यहीरद्युतिवारिवर्तिस्वच्छाय सच्छाय निजालिजालम्। भैमी पपावपाङ्गैः अथ राजराजिः।' इत्यग्रिमेणेतः षोडशेनान्वयः।

**व्याख्या**- अस्मिञ्छ्लोके द्वे पदे दमयन्त्याः विशेषणभूते स्तः। पूर्वार्द्धं सम्पूर्णमेकं पदम् उत्तरार्द्धञ्च श्लोकस्यैकम् पदम्। तथाहि स्निग्ध्त्वमायाजललेपलोपसयत्नरत्नांशुमृजांशुकाभाम् दमयन्तीम् = स्निग्धत्वम् = तैलाभ्यक्तामासत्वम् मायाजलम् = कृत्रिमोदकम् लेपः अधोभागो वर्णोत्कर्षकारी द्रव्यान्तरसंयोगः एतेषां त्रयाणां दोषाणां अभावे सति सयत्नानि कृतप्रयत्नानि अनीतदोषाणीति यावत् तेषां रत्नानाम् अंशभृजा = किरणशुद्धिः सैवांशुकाभा = वस्त्रदीप्तिः यस्यास्ताम् दमयन्तीम् स्निग्धत्वाय नैर्मल्याय मायाजलस्य = कृत्रिमोदकस्य लेपः = प्रक्षेपस्तस्य लोपेनायाकरणेन सयत्नानां = कृतगुणाधानानां निर्मलानां = नैर्मयार्थं पाणिपाद संज्ञक मायाजलप्रक्षेपणं विनैव निर्मलानामिति यावत्। एवं भूतानाम् रत्नानामंशवः तद्वन्मृजा शुद्धिर्यस्याः एवं विधा रत्नकिरणशुद्धियुक्ता वा अंशुकाभा = वस्त्रदीप्तिर्यस्याः तां दमयन्तीमिति यावत्। किञ्च नेपथ्यहीरद्युतिवारिवर्तिस्वच्छाय सच्छाय निजालिजालांदमयन्तीं

नेपथ्येषु = वेषरचनासुविद्यन्ते ये हीराः = हीरकाणि, तेषां याः द्युतयः = कान्तयः तत्र विद्यते यद् वारि = जलं तत्र वर्त्तते इति वर्ति स्वच्छायम् = भैम्या एव प्रतिविम्बम् तस्य सच्छायम् = समानच्छायं सदृशं तत्तुल्यं निजं स्वीयमालिजालं = सखीवृन्दं यस्यास्ताम् दमयन्तीम् राजराजिः अपाङ्गैः पपौ इति शेषः।

**समासः स्निग्धत्वमायाजललेपलोपसयत्नरत्नांशुमृजांशुकाभाम्**- स्निग्धत्वं चमायाजलं च लेपश्च = स्निग्धत्वमायाजललेपाःतेषाम् लोपे सयत्नानि यानि रत्नानि = स्निग्धत्वमाया जललेपलोपसयत्नरत्नानि तेषां या अंशुमृजा सैवांशुकाभा यस्यास्ताम्। नेपथ्यहीरद्युतिवारिवर्त्तिस्वच्छायसच्छाय निजालिजालाम् = नेपथ्येषु ये हीराः तेषां द्युतिरेव वारिं तत्र वर्त्तते इति = नेपथ्यहीरद्युतिवारिवर्ति यत् स्वच्छायम् तस्य सच्छायम् यत् निजालिजालम् यस्यास्ताम् नेपथ्यहीरद्युतिवारिवर्त्तिस्वच्छायसच्छायनिजालिजालाम्।

**कोशः**- नेपथ्यम् नेपथ्यं तु प्रसाधने। रङ्गभूमौ वेषभेदे। इति हैमः अंशुः-अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ इति हैमः।

**छन्दोलङ्कारादिकम्**- अस्मिञ्छ्लोके 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेण वसन्ततिलकावृत्तम्। अत्रानुप्रासातिशयोक्तिरङ्कार इति साहित्यविद्याधरी। अत्र भूषामणिप्रभाझरमग्ने सखीजने स्वप्रतिबिम्बत्वादु प्रेक्षया तासामपि तत्समानवस्तुव्यज्यते इति जीवातुः।

**श्लोक १८- सामोदपुष्पाशुगवासिताङ्गीम् ---------- अभिलष्यमाणाम्।**

**सन्दर्भादिकम्**- महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरित महाकाव्यस्य दशमात् सर्गात् परिगृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् स्वयम्बरसभायां समागता दमयन्ती वसन्तलक्ष्मीरिवासीत्, यां कामयन्ते स्म स्वेतरेच्छापूरणसमर्थाः राजानोऽपि। येन प्रकारेण कल्पवृक्षः परेषामिच्छाः पूरयति अथापि स्वयं वसन्तलक्ष्मीं कामयते। तेनैव प्रकारेण स्वेतराणामिच्छापूरणसमर्था अपि राजानः तामभिलषन्ति स्म।

**अन्वयः**-सामोदपुष्पाशुगवासिताङ्गीम् किशोरशाखाग्रशयालिमालाम्, वसन्तलक्ष्मीमिव तैः कल्पद्रुमैः अपि राजाभिः अभिलष्यमाणाम् 'दमयन्तीम् राजाराजिः = अपाङ्गैः पपौ।

**व्याख्या**- अतिसुन्दरताललामेन सामोदः = सहर्षः, पुष्पाशुगः = कामदेवः

तेन वासितम् = अधिष्ठितमङ्गं यस्यास्ताम् अथवा सामोदानि = सुगन्धीनि पुष्पाणि, आशुगो = मलयमारूतः। तैर्वासिताङ्गीम् = सुरभितकृतगात्राम्। किशोरशाखाग्रशयालिमलाम् किशोराणि = सूक्ष्माणि, शाखाग्राणि = अंगुलयो येषाम् एवं विधाः शयाः = हस्ताः यस्या एवं विधा आलिमाला = सखीमसूहो यस्यास्ताम्। अथवा नूतन शाखाग्रवद्बालपल्लववद् अतिरक्तः करो यस्या एवं भूता आलिमाला = सखीसमूहो यस्यास्ताम्। अथ च बालशाखाकिसलयशयालिमालाभ्रमरपंक्तिः यस्यां सा तां, वसन्तलक्ष्मीमिव = वसन्तशोभामिव स्थिताम् तैः = तत्र स्वयम्बरे समुपविष्टैः, कल्पद्रुमैः = कल्पद्रुमवत् स्वेतरसमस्त याचकवृन्देच्छा परिपूरणसमर्थैः, अपि राजभिः नृपैः अभिलष्यमाणाम् = कामयमानां, दमयन्तीं राजसमूहः अपाङ्गैःपपौ इति भावः।

**समासः-** सामोदपुष्पाशुगवासिताङ्गीम् = आमोदेन सहितः सामोदः, पुष्पाशुगः पुष्पाण्येव आशुगाः यस्याऽसौ पुष्पाशुगः, सामोदश्चाऽसौ पुष्पाशुगः सामोदपुष्पाशुगः। तेन वासितानि अङ्गानि यस्यास्ताम् = सामोद पुष्पाशुगवासिताङ्गीम्। किशोरशाखाग्रशयालिमालाम् = किशोराणि शाखाग्राणि येषाम् एवं विधाः शयाः यस्या एवं विधा आलिमाला यस्यास्ताम् = किशोरशाखग्रशयालिमालाम्। वसन्तलक्ष्मीम् = वसन्तस्य लक्ष्मीम् = वसन्तलक्ष्मीम्।

**कोशः-** आमोदः - आमोदो गन्धहर्षयोः इति हैमः। आशुगः- आशुगोऽर्केशरेवायावुत्सर्गस्त्यागदानयोः इति हैमः।

**छन्दोलङ्कारादिकम्-** 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अत्रोपमातिशयोक्तिरलङ्कारः इति साहित्यविद्याधरी।

**श्लोक १९- तदङ्गभोगावलि ---------------- मण्डनमर्पयन्तीम्।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् स्वयम्वरसभायां समागतायाः दमयन्त्याः सौन्दर्यमवर्णनीयमासीदतः तस्या भोगावलिगानकर्त्र्यो मध्ये एव कुण्ठितबुद्धयः सन्त्यो यदा लज्जिता अभूवन् तदा ह्रीमती दमयन्ती स्वहृदयस्थितं लज्जास्वरूपं भूषणं ताभ्यो प्रतिदानरूपेण प्रादात्।

**अन्वयः-** तदङ्ग भोगावलिगायनीनां मध्ये निरूक्तिक्रमकुण्ठितानाम् अप्सरसां स्वयंधृतां हृदः मण्डनं ह्रियम् प्रसादमर्पयन्तीम् (भैमीं अपाङ्गैः पपौ राजराजिः।)

**व्याख्या-** तदङ्ग-भोगावलि-गायनीनाम् सैवाङ्गं काव्यार्थतया शरीरं यासां

ता तद्विषया इति यावत् 'शब्दादौ मूर्तिभिः ख्यातौ इति लक्षणात् तासां भोगावलीनां = प्रबन्धविशेषाणां गायिन्यः = गानकर्त्र्यः 'कर्तरिल्युट्' ङ.ीष् तासां मध्ये = असमाप्तावेव स्तुतौ, निरूक्तिक्रमे = निर्वचनपरिपाट्यां विषये कुण्ठितानाम् कतिपयानामेवाङ्ग.ानां वर्णनं कृतम् तदनन्तरं स्फुर्तेरभावाद्धतशक्तीनां, तुष्णीं भूतानाम् अप्सरसाम् = मेनकादीनां स्वर्वेश्यानाम्, स्वयम् = स्वेन धृताम् = धारणकृताम्, हृदः = स्त्रीहृदयस्य मण्डनम् = अलङ्करणस्वरूपम्, ह्रियम् = लज्जाम्, प्रसादम् = प्रसन्नताजन्यं पुरस्कारम्, अर्पयन्तीम् = यच्छतीम् भैमीं राजराजिः अपाङ्क्तैपपौ' इति भावः।

लोकेऽपि स्तुतिगायकेभ्यः पुरस्कारः प्रदीयते। तेनैव प्रकारेण सा दमयन्ती स्वगुणगानकर्त्रीभ्यः अप्सरोभ्यः स्वहृदयस्यालङ्कारभूतां लज्जां प्रादात्। येन प्रकारेण दमयन्त्याः कृत्स्नतया वर्णनायामसमर्थाः अप्सरसः, स्वाशक्तिमालोच्य लज्जिताः संजाताः तेनैव प्रकारेण सा दमयन्त्यपि लज्जिता बभूवेति भावः।

**समासः-** तदङ्गभोगावलिगायनीनाम् = तस्याः अङ्गानि तदङ्ग.ानि, तेषां भोगावल्याः गायनीनाम् = तदङ्गभोगावालिगायनीनाम्। निरूक्तिक्रमकुण्ठितानाम् = निरूक्तेः क्रम निरूक्तिक्रमः तत्र कुण्ठितानाम् = निरूक्तिक्रमकुण्ठितानाम्।

**कोशः-** भोगः-भोगस्तु राज्ये वेश्याभृतौ सुखे। धनेहिकायफणयोः पालनाभ्यवहारयोः इति हैमः। अङ्कम् अङ्कमन्तिकगात्रयोः। उपसर्जनभूते स्यात् अभ्युपायप्रतीकयोः इति हैमः। प्रसादः = प्रसादस्तु प्रसन्नता इत्यमरः।

**छन्दोलङ्कारादिकम्-** 'ज्ञेया वसन्ततिलका तभजा जगौ गः इति लक्षणनुसारेणात्र वसन्ततिलकावृत्तम्। अत्र रूपकप्रतीपोपमानोत्प्रेक्षालङ्काराः' इति साहित्यविद्याधरीकारः।

**श्लोक २०- रसस्य श्रृङ्गार इति ------------ वैदग्ध्यनिधेः पयोधेः।**

**सन्दर्भादिकम् -** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् परिगृहीतेऽस्मिञ्छ्लोके महाकविः वर्णयति यत् दमयन्त्याः दर्शनात् पूर्व सर्वे राजान अज्ञासिषुः यत् श्रृङ्गारः कल्पनाया एव विषयो वर्त्तते नतु सः वास्तविकः। किन्तु दर्शनानन्तरं ते निश्चितमकार्षुः यत् नूनम् श्रृङ्गारस्य सागरो वर्त्तते यस्मात् सागरादयं श्रृङ्गारलक्ष्मीः दमयन्ती प्रादुर्बभूव या सौन्दर्यचातुर्ययोः आकरस्वरूपा वर्त्तते।

**अन्वयः-** श्रृङ्ग.ार इति श्रुतस्य रसस्य क्व नाम उदन्वान् जागर्ति, अन्यथा लावण्यवैदग्ध्यनिधिः इयं श्रीः कस्मात् उदस्थात्।

**व्याख्या-** रसानां नवसंख्यात्वं प्रख्यातम्। तेषु मध्ये श्रृङ्गारः इति श्रुतस्य = श्रृङ्गारनाम्ना प्रख्यातस्य, श्रृङ्गारस्य तेषु समेषु रसेष्वादिमत्वात् रसराजत्वेन च प्रख्याततत्वात्, इत्थं भूतस्य श्रृङ्गारस्य, उत्पत्तिस्थानम् महान् = अतिविस्तृतः उदन्वान् समुद्रः, क्व = कुत्र, जागर्ति = वर्त्तते? कस्मिन् देशे विद्यतेऽयं सागर इत्यर्थः। नामेति प्रश्ने वा, संभावनायां वा, अप्यर्थे वा। नूनम् कुत्रापि रससागरेण भाव्यम्। कस्मादित्थं प्रश्नायते इति चेदाह अन्यथा = श्रृङ्गाररसस्य समुद्रस्याभावे, सति लावण्य वैदग्ध्यनिधिः = लवण्यस्य = सौन्दर्यसागरभूतस्य 'क्षणे क्षणे यन्वतामुपैति तदेव रूपं रमणीयतायाः। वैदग्ध्यस्य = निपुणतायाः चातुर्यस्येति भावः, अनयोरूभयोर्निधिः इयम्, = एषा, दमयन्ती स्वरूपा, श्रीः = लक्ष्मीः, कस्मात् = केन प्रकारेण, उद्स्थात् = उत्पद्येत। येन प्रकारेण क्षीरसागरात् लक्ष्मीः प्रादुर्बभूव, तेनैव प्रकारेणास्या दमयन्त्या अपि श्रीस्वरूपायाः कस्माच्चित् सागरात् उत्पत्तिर्नन भवेत्।

**छन्दोलङ्कारादिकम्-** अत्र इयं श्रीः' इति विषयनिगरणेन विषयिमात्र निबन्धनात् भेदेऽप्यभेदात् सातिशयोक्तिः। एतन्मूला च पूर्वेक्ता श्रृङ्गाररसभवोत्प्रेक्षा इत्यनयोरङ्गाङ्गिभावेन संकरः। इति जीवातुः।

**समासः-** **लावण्यवैदग्ध्यनिधिः** लवण्यं च वैदग्ध्यं च लावण्यवैग्ध्ये तयोः निधिः लावणवैदग्ध्यनिधिः।

**कोशः-** रसः-रसःस्वादे जले वीर्ये श्रृङ्गारादौ विषे द्रवे। चोले रोगे देहधातौ तिक्तादौ पारदेऽपिच।। इति हैमः श्रृङ्गारो-गजमण्डने। सुरते रसभेदे च। इति हैमः। श्रीः -श्रीर्लक्ष्म्यां सरलद्रुमे। वेषोपकरणे वेषरचनायां मतौ गिरि। शोभात्रिवर्गसम्पत्योः। इति हैमः।

**श्लोक २१- साक्षात् सुधांशुर्मुखमेव -------------- गुणमात्रवृत्या।।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितनामकस्य महाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति इदं यत् दमयन्त्याः मुखम् वर्त्तते तदेव मुख्यः चन्द्रो वर्त्तते। साक्षादवलोक्यमानत्वात्, सर्वथा निर्दोषत्वात्, सकलकामिजनाह्लादकत्वाच्च द्युलोकस्थो यः शशलक्ष्मलांक्षितश्चन्द्रो दृश्यते स तु गौणश्चन्द्रः दूरस्थत्वात् सदोषत्वात् च। अनेनैव प्रकारेण अस्याः यत् भ्रुकुटियुगलमास्ते तदेव कामचापो वर्त्तते, पुष्पनिर्मितम् कामधनुस्तु गौणः।

**अन्वयः-** भैम्याः मुखम्, साक्षात् सुधांशुः दिवः शशाङ्कः लाक्षणिकः

इति स्फुटम् एतदभ्रुवौ मुख्यम् अनङ्ग.चापं पुनः पुष्पं तद्गुणमात्र वृत्या।

**व्याख्या-** भैम्याः -दमयन्त्याः मुखमेव = वदनमेव, साक्षात् = मुख्यः उपमानभूतः सुधांशः = अमृतांशुः कविसंकेते उपमानत्वेन प्रसिद्धश्चन्द्रो भैमीमुखलक्षण एव। अतिवृत्तत्वात्, अकलङ्क.त्वात् आह्लादकत्वात् अधरलक्षणस्वादुतमसुधावत्वाच्च चन्द्रादाधिक्यं भैमीमुखस्य चन्द्रात्। भैमीमुखमेव सुधांशुः साक्षात् = प्रत्यक्षः संन्निकटतरः इति यावत्। अथवा = भैमीमुखमेव साक्षात् सुधांशुः = अभिधावृत्या सुधांशुः, ओष्ठलक्षणमुख्यसुधासंबन्धात् सुधांशुपदेन मुख्यवृत्या भैमीमुखमेवाभिधेयं भवतीतिभावः। दिवः = आकाशस्थः शशाङ्कः = चन्द्रः तु स्फुटम् = निश्चितरूपेण, लाक्षणिकः = लक्षणेन = कलङ्के.न संसृष्टः। अतः साक्षात् = मुख्यः उपमानभूतो न भवति किन्तु न्यूनगुणत्वादुपमेयभूतमेवेत्यर्थः। अथवा = साक्षात् अस्मादादि रासनप्रत्यक्षग्रहणयोग्यत्वात्। दिविस्थितस्तु लाक्षणिकः आनुमानिकः। दिविस्थश्चन्द्रस्तु देवैकभोग्यत्वादस्मदादि = अप्रत्यक्षत्वात्, प्रत्यक्षानुमानयोः प्रत्यक्षस्यैव वलीयस्त्वाच्च। किञ्च एतद्भ्रुवौ = एतस्याः दमयन्त्याः भ्रुवौ मुखमनङ्गचापम् = कामस्य चापम् अभिधावृत्या मुखे भवं मुख्यम् भ्रूरूपे कामचापं मुखे भवत्वान्मुख्यम् यत् पुनः पुष्पमनङ्गचापत्वेन व्यवह्रियते तत् तयोः वक्रत्वोन्मादकत्व लक्षणो यो गुणः तन्मात्रत्वात् तदेकदेशभूतस्य उन्मादकत्व स्यैव वृत्त्या वर्त्तनेन नतु तत्र वक्रत्वं वर्त्तते। ततश्चैकदेशसादृश्यलक्षणत्वाद् गौणीनिमित्ताद् गौणी एव वृत्याऽनङ्ग. चापत्वेन व्यवहर्त्तव्यम्।

**समासः-** एतद्भ्रुवौ = एतस्याः भ्रुवौ एतदभ्रुवौ। गुणमात्रवृत्त्या = गुणमात्रस्य वृत्तिः = गुणमात्र वृतिः तया गुणमात्रवृत्त्या।

**कोशः-** सुधांशुः चन्द्रमाश्चन्द्रः इन्दुः कुमुदवान्धवः। इत्यमरः। मुखम् = तुण्डं लपनं मुखम् । इत्यमरः। साक्षात् - प्रत्यक्षतुल्ययोः। इति हैमः।

**छन्दोलङ्कारादिकम्-** "उक्ता वसन्ततिलका तभजा जगौ गः। इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अत्रातिशयोक्तिरलङ्कारः इति साहित्यविद्याधरी। द्वयोरुत्प्रेक्षयोः निरपेक्षत्वात् संसृष्टिरिति साहित्यविद्याधरी।

**श्लोक २२- एतद्दृशारम्बुरुहैर्विशेषम्----------------मिहाक्षियुग्मे।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहा काव्यस्य दशमात् सर्गात् परिगृहीतेऽस्मिञ्छ्लोके महाकविः वर्णयति यत् दमयन्त्याः नेत्रयुगलमवलोक्य यद्मदमयन्तीनेत्रयोः को विशिष्यते इति जिज्ञासया लोकः

इमे भ्रमरदम्पती एव पृच्छतु। भमरदम्पत्योः उभयोः रसत्वात्। भ्रमरदम्पती पद्मनेषु निवसति, पद्मरस पानलिप्सया। अतएव ब्रह्मा भ्रमरदम्पत्योः वसतिं चकार दमयन्त्याः नेत्रकनीनिकायामित्युत्प्रेक्षते महाकविः।

**अन्वयः-** जनः एतादृशोः अम्बुरूहैर्विशेषं तगुणज्ञौ भृङ्गौ पृच्छतु इति इव धाता इह अक्षियुग्मे तात्कालिकस्त्रीपुंसमाध्यस्थ्यम् अकृत।।

**व्याख्या-** जनः = लोकः एतदृशोः = एतत् सदृशयोः भैम्याः नेत्रयोः, अम्बुरूहैः = पद्मैः सह विशेषम् = तारतम्यं, तद्गुणज्ञौ = तयोः पद्मनेत्रयोः गुणान् = तारतम्यम् जानातीति ज्ञः "इगुपधज्ञाप्रीकिरः कः" इति कः। तारतम्यवेदिनौ, भृङ्गौ = भृङ्गी च भृङ्गश्च = भृङ्गौ = भ्रमरदम्पती पृच्छतु = भैम्याः नेत्रे रमणीये अथवा कमलानि रमणीयानिभवन्तीति पृच्छतु, इति = इत्येतत्, धिया = बुद्ध्या इव धाता = ब्रह्मा। इह = अस्मिन् दमयन्त्याः नेत्रयुगले = अक्षियुग्मे तारके एव = कनीनिकायामेवास्त्रीपुंसौ = भ्रमरदम्पती तयोः माध्यस्थ्यं = मध्यभागवर्तित्वं अथच साक्षित्वं अकृत = कृतवान्।

**समासः-** तद्गुणज्ञौ = तयोः गुणान् जानातीति तदगुणज्ञः तौ = तद्गुणज्ञौ। अक्षियुग्मे = अक्ष्णोःयुग्मं = अक्षियुग्मं तस्मिन् = अक्षियुग्मे। तारकालिस्त्रीपुंसौ = अचतुरइत्यादिना। समासान्तनिपातः।

**कोशः-** विशेषः- विशेषस्तु व्यक्तावयवेऽपि च। आधिक्ये चाथ शुश्रुषोपोसनाश्रवणे द्वयोः। इति हैमः।भृङ्गः = भृङ्गस्तु पिङ्ग धूम्याटमार्कवाः। षट्पदोऽथ। इति हैमः। इति- इति स्वरूपे सांनिध्ये विवक्षानियमेऽपि च। हेतौ प्रकार प्रत्यक्षप्रकाशेष्ववधारणे। इति हैमः।

**छन्दोलङ्करादिकम्-** "ज्ञेया वसन्ततिलका तभजा जगौ गः। इति लक्षणाऽनुसारेणात्र वसन्ततिलकावृत्तम्। अत्रोत्प्रेक्षारूपकालङ्कारः इति साहित्यविद्याधरी।

**श्लोक २३- छद्मैव तच्छम्बरजं विसिन्याः -- शातशिखैनखैर्यत्।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोक महाकविर्वर्णयति यत् शम्बरजं जलं शम्बरासुरजं मायाजालंमायिकं वर्त्तते। येन प्रकारेण कमलनालं कण्टकयुक्तं भवति तेनैव प्रकारेण दमयन्त्याः करकमलं रोमाञ्चयुक्तं नखाग्रेण चोत्कण्टकितं विद्यते इति भावः ।

**अन्वयः-** विसिन्याः तत् शम्बरजं छद्म एव अस्याः तु भुजाग्रसद्म तत् पदमम् यत् उत्कण्टकात् नालात् उद्गमनेन शतशिखैः नखैः उत्कण्टकम्।।

**व्याख्या-** विसिन्याः = कमलिन्याः तत् = पद्मं, शम्बरजं = शम्बरात्, जलात्, जातम्, छद्मैव = अलीकमेवास्ते, अथ च शम्बरात् = शम्बराभिधात् दानवात् जातम् = उत्पन्नम् माया = जातम्, छद्मैव = अलीकमेव नतु पारमार्थिकम्। भुजाग्रसदनं = भुजयोः = वाह्वोः, अग्रम् = अग्रभाग एव सदनं = आश्रयो यस्य तत् = भुजाग्रसदनं तत् = कमलम्, पद्मम् = पारिभाषिकं कमलं विद्यते इत्यर्थः। कुतःयत् = यस्मात् कारणात्, उत्कण्टकात् = उद्गताः = उत्पन्नाः कण्टकाः पुलकाश्च यस्य तस्मात् नालात् = पनद्मिनीनालात् भुजदण्डोस्य, उदगमनेन = प्रादुर्भूतेन, शातशिखैः = शाताः = तीक्ष्णाः शिखाः = अग्रभागाः येषां ते तथाभूताः तैः, नखैः = करजैः, उत्कण्टकम् = उदभूतकण्टकमास्ते एतत् पाणिपद्ममितिशेषः। विसपद्मन्तु उत्कण्टकनालादुद्भूतमुत्पन्नमुत्कण्टकम्, पद्मकण्टकाभावात् भैमी पाणि पदममेव सोत्कण्टकम्, उत्कण्टकात्, वाहुदण्डात् उत्पन्नम्। अस्त्येव नियमः "कारणगुणाः कार्यगुणानारभन्ते इति।

**समासः-** शम्बरजम् = शम्बरात् जातम् = शम्बरजम्। भुजाग्रसद्म = भुजयोरग्र एव सद्म यस्याऽसौ तत्-भुजाग्रसद्म। शातशिखैः = शाताः शिखाः येषां ते तैः = शातशिखैः।

**कोशः-**कण्टकम् = कण्टकः क्षुद्रवैरिणि। वेणौ द्रुमाङ्गे रोमाञ्चे कलङ्कोऽङ्कापवादयोः। कलायासमले चापीति हैमः। शम्बरः दैत्यो, शम्बरोम्बुनि। इति वैजयन्ती।

**छन्दोलङ्कारादिकम्-** 'ज्ञेया वसन्ततिलका तभजा जगौ गः इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्।

अत्रातिशयोक्तिरलङ्कारः इति साहित्यविद्याधरी। भैमीपाणिपद्मस्य प्रसिद्धपद्मव्यतिरेकोक्त्या व्यतिरेकालङ्कारः। इति जीवातुः।

**श्लोक २४- जागर्ति मर्त्येषु तुलार्थमस्या ------------ लोकबाधः।।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् दमयन्ती सदृशी कापि नारी नतु मर्त्यलोके वर्त्तते, न वा पाताले न वा स्वर्गे। यस्मात् कारणात् तत्सदृशी कापि नारी मर्त्यलोके नहि समुपलब्धा अत एव तस्याः सदृश्याः मर्त्यलोकेऽभावो सिद्धयति। यदि नाकलोके स्वर्गलोके वा तत्सदृशी सुन्दरी स्यात् तर्हि तेभ्यो लोकेभ्यः समे पुरुषाः नागादिकः सुरादिका वा अत्र कथं

समागच्छेयुः। यस्मात् कारणात् तेभ्योऽपि लोकेभ्यो नागादिकाः देवादिकाश्च दमयन्त्याः प्राप्तेः कामनयाऽत्र समागता तस्मादेव कारणात् तेष्वपि लोकेषु दमयन्त्याः सदृश्याः सुन्दर्या अभावः सिद्ध्यति।

**अन्वयः-** अस्याः तुलार्थ योग्याः मर्त्येषु जागर्ति इति योगानुपलम्भनम् नाके अथवा अधः भुवने यदि अस्ति तदा कौतस्कुतः लोकबाधो न?

**व्याख्याः-** अस्याः = दमयन्त्याः, तुलार्थम् = औपम्याय, योग्याः = = मर्त्येषु = मनुष्येषु काचिदस्तीति शेष इति अत्र, नः अस्माकम्, योग्यानुपलम्भनमेव = यदि काचित् स्यात्, तर्हि समुपलभ्येत, नोपलभ्यते यस्मात् कारणात् तस्मान्नास्तीति, प्रकारायोग्यानुपलब्धिः एव प्रमाणम् जागर्ति = विलसति। नाके = स्वर्गलोके अथवा अधः = पाताललोके च यदि स्यात् एतस्यास्सदृशीरमणीया रमणी, तदा = तर्हि, कौतस्कुतानां = कुतः कुतः अस्मिन् कुण्डिनपुरे स्वर्गादिलोकेभ्यः समागतानाम् लोकानाम् = देवनागदिरूपाणं बाधः = अत्र ससम्मर्दः नस्यात्। इति शेषः तत्रत्याः पुरूषाः अत्र नागताः भरेवरन् इति भावः। इत्थमनुपलब्ध्या अर्थापत्त्या च दमयन्त्याः सदृश्याः रमण्याः अभावः सिद्ध्यति।

**समासः-** योग्यानुपलम्भनम् = योग्यंचेदमपनुलम्भनम् = योग्यानुपलम्भनम्। कौतस्कुतलोकबाधः = कुतः कुतः इति कौतस्कुतः। कौतस्कुतानां लोकानांबाधः = कौतस्कुतलोकबाधः।

**कोशः-** नाकः = स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः। इत्यमरः। भुवनम् = भुवनं लोकखाम्बुषु। इति हैमः। लोकः -लोकस्तु भुवने जने। इत्यमरः।

**श्लोक २५- नमः करभ्योऽस्तु विधेर्न ---------- अनङ्गतयानुरूपम्।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरित महाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् दमयन्ती एतादृशी मनोज्ञा वर्त्तते यत् तामवलोक्य ब्रह्मण अवशिष्टां सृष्टिं चावलोक्या नुमीयते यदस्याः रचनायाः शिल्पी बह्मा नहि भवितुमर्हति। यदि ब्रह्मणः करस्य स्पर्शोऽपि अनया साकं भवेत् तदेयं मलिना भवेत्। कामः अनङ्गो वर्त्तते। अतएव कामशिल्पिन इयं रचना भवितुमर्हति। न तु ब्रह्मणः।

**अन्वयः-** विधेः करेभ्यः नमः अस्तु न वा अस्तु, अस्य धियाऽपि न स्पृष्टं किं पुनः तैः हि यस्मात् इदं शिल्पं लुलितं स्यात् अनङ्गतया मनोभुव

अनुरूपम्।

**व्याख्या-** विधेः = ब्रह्मणः, करेभ्यः = हस्तेभ्यः नमः = नमस्कारः अस्तु = भवतु, नवा = नहि वा, अस्तु = भवतु, अत्र नमः स्वस्ति' इत्यादिना चतुर्थी विभक्तिः। अस्य = विधेः, धियाऽपि = बुद्ध्यापि, इदम् दमयन्त्याः निर्माणरूपं शिल्पम्, न = नहि, स्पृष्टम् = स्पर्शकृतम्। किं पुनः = ब्रह्मणः करैः। यदि तादृशस्य शिल्पस्य कल्पनाऽपि कर्तुं न प्रभवति ब्रह्मा तदा का कथा तस्य स्वकरेण निर्माणस्येति भावः। हि = यतः, यस्मात् = कारणात् इदम् = दमयन्त्याः निर्माणरूपमतिकोमलं शिल्पम्, तस्य करेण स्पर्शे कृते सति, लुलितम् = मृदितम्, स्यात् = दमयन्त्याः शरीरस्य मार्दवातिशययुक्तत्वात्। यस्मात् कारणात् कामदेव, अनङ्गो वर्त्तते, तस्मात् कारणात् तस्यानङ्गतया = शरीररहितत्वात्, इदम् = दमयन्त्याः निर्माणकौशलस्य शिल्पम्, मनोभुवः = कामदेवस्य, अनुरूपम् = अनुकूलमास्ते। अतएव दमयन्तीयं नूनं कामदेवेन स्यान्निर्मिता, नतु विषमसृष्टिकारिणा ब्रह्मणेति भावः।

**समासः-** अनङ्गतया = नास्ति अङ्गयस्याऽसौ अनङ्ग.ः; तस्य भावस्तत्ता। तया; अनङ्ग.तया।

**कोशः-** करः = बलिहस्तांशवः कराः। इत्यमरः। धीः-बुद्धिर्मनीषाधीषणा धीः प्रज्ञा शेमुषी मतिः। इत्यमरः अनङ्ग.ः = कन्दर्पो दर्पकोऽनङ्ग.ः कामः पञ्चशरः स्मरः। इत्यमरः।

**छन्दोऽलङ्कारादिकम्-** 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र श्लोके वसन्ततिलकावृत्तम्। अत्र भैमीशिल्पस्य विधिकरणसंबन्धेऽपि असम्बन्धोक्तेरतिशयोक्तिः तत्सापेक्षाचेयम् अनङ्गसृष्टित्वोत्प्रेक्षेति सङ्करः। इति जीवातुकारोः मल्लिनाथः

**श्लोक २६- स्मितेन गौरी हरिणी ------------ क्रामतिमेनकापि ।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितनामकस्य महाकाव्यस्य दशमात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविः एकस्या एव दमयन्त्या अनेकधा उल्लेखं करोति। स वक्ति यदियम् गौरीवत् स्मितं करोति, अस्या नेत्रे हरिणीनाम्न्यः देवाङ्गनायाः नेत्रतुल्ये वर्त्तेते। कण्ठस्वरेणेयं वीणावतीवदाभाति, इयं शरीरकान्त्या हेमानाम्न्याः देवाङ्ग.नायाः साम्यं विभर्ति। अस्या अवशिष्टान्यङ्गानिविलोक्य मेनकानाम्नीदेवाङ्गना स्मृत्यधिरूढा भवति।

**अन्वयः**- इयं स्मितेन गौरी दृशा हरिणी, सुकण्ठभासा वीणावती, कायप्रभया हेमा एवं अङ्गशेषैः का अपि तन्वी मे मतिं न क्रामति। अथ च मेनका अपि तन्वी मे मतिं क्रामति।

**व्याख्याः**- इयम् = एषा भैमी, स्मितेन = ईषद् हास्येन, गौरी = गौर्यभिधाना काचिद् देवाङ्गना, सा च मे मतिं क्रामतीति उत्तरेणान्वयः। एवमुत्तरत्रापि। दृशा = दृशोः शोभया, हरिणी = हरिण्यभिधाना काचिद्देवाङ्गना, कुरङ्गीच। सुस्वरकण्ठभासा = सुस्वरश्चासौ कण्ठस्य भाः तेन = सुमधुरकण्ठध्वनिसम्पत्त्या, वीणावती = एतन्नाम्नी देवाङ्गना कान्त्या च = हेमा अप्सरो विशेषः सुवर्णञ्च। अङ्गशेषैः = अङ्गषु = अवयवेषु, शेषैः = अवशिष्टैः अवशिष्टाङ्गै रितिभावः तन्वी = कृशाङ्गी, मेनकाऽपि अप्सरोविशेषोऽपि मे = मम, मतिं = बुद्धिं क्रामति = अधिरोहति। एतस्या अवशिष्टानि अङ्गानि विलोक्य कृशाङ्ग्याः मेनकाया अपि स्मरणं भवति। किञ्च कापि तन्वी = सुन्दरी, उपमानाय मे मतिम् = बुद्धिं न = नहि, अधिरोहति इति भावः, त्रैलोक्यस्य कापि स्त्री उपमानार्हा नहि भवतीति भावः।

**समासः**- सुस्वरकण्ठभासा = सुस्वरस्य कण्ठस्य या हि भाः तया = सुस्वरकण्ठभासा। **कायप्रभया** कायस्य प्रभा = कायप्रभा तया कायप्रभया। अङ्गशेषैः = अङ्गषु शेषैः = अङ्गशेषैः।

**कोशः**- मतिः -बुद्धिर्मनीषा धीषणा धीः प्रज्ञा शेमुषी मतिः। इत्यमरः। अङ्गम् = अङ्गमन्तिकगात्रयोः। उपसर्जनभूते स्यादभ्युपाय प्रतीकयोः। इति हैमः। शेषः -शेषोऽनन्ते वधे सीरीण्युपयुक्तेतरेऽपि च।

**श्लोक २७- तां देवतामिव मुखेन्दु ----- राजसभां बभाज।।**

**सन्दर्भादिकम्**- महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरित महाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् दमयन्ती स्वाभिलषितं पतिं प्राप्तुम् तस्यां स्वयम्बरसभायां प्रविवेश या सभा वरप्रदातुमुद्यता देवतेवासीत् निर्निमिषनयना। येन प्रकारेण निर्निमिष नयना राजमण्डली दमयन्तीमपश्यत् तेनैव प्रकारेण सा सभाऽपि। इत्थं राजराजिसभयोरतीवसाम्यमासीत्।

**अन्वयः**- तदनु भीमभूमीन्द्रजा चेतसि धृतस्य वरस्य लाभाय मुखेन्दलसत् प्रसादाम् रसात् अनिमिषेण अक्ष्णा निभालयन्ती देवतामिव तां राजसभां बभ्राज।

**व्याख्या**- तदनु = आनन्दनादोत्थानानन्तरम्, भीमभूमीन्द्रजा भीमस्य =

कुण्डिनपुराधीशस्य, या भूमिः = पृथ्वी तस्याः इन्द्रः = स्वामी, तस्यात्मजा = दमयन्तीति यावत्। चेतसि = आत्मनि, धृतस्य = अवधारितस्य वरस्य = पत्युः, लाभाय = अवाप्तये, स्वाभिलषितपत्यवाप्तुमिति यावत्, मुखेन्दुलसत्प्रसादाम् = मुखेन्दुषु = राज्ञाम् मुखचन्द्रेषु, लसन् = शोभमानः प्रसादः = प्रसन्नता यस्यास्तां, त्वं स्वमनोभिलषितं वरं वरय इति वाक्येन दमयन्त्याः मनोनुकूलम् वरदानं दातुमुद्यतां,. रसात् = दमयन्त्याः सभायां प्रवेशजन्यप्रमोदप्रकर्षात् अनिमिषेण = निमेषरहितेन, अक्ष्णा = नेत्रेण, निभालयन्तीम् = दमयन्तीमवलोकयन्तीम्, देवतामिव = देवतासदृशीम् = देवतानिमेषरहिता भवति, सभापीयं तथैवासीत् निर्निमेषचक्षुषा तां दमयन्तीमवलोकयन्तीम् यथा प्रसंन्ना देवता वरदानं दत्त्वा स्वभक्तं लब्धमनोरथं करोति तथैव सभापि दमयन्त्यभिलषित पतिप्रदानाय उद्यतासीत्। ताम् = तथाविधां राजसभाम् = राज्ञां स्वयम्बरे समागतानां सभाम् बभाज = सिषेवे।

**समासः**- तदनु = तस्मादनु = तदनु। भीमभूमीन्द्रजा = भीमस्य या भूमिः तस्या इन्द्रः तस्माज्जाता = भीमभूमीन्द्रजा। मुखेन्दुलसत्प्रसादाम् = मुखमेवेन्दुः = मुखेन्दुः, तत्र लसन् प्रसादो यस्यास्ताम् मुखेन्दुलसत्प्रसादाम्। राजसभाम् = राज्ञां सभा राजसभा ताम्।

**कोशः**- प्रसादः -प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्य प्रसत्तिषु। इति, विश्वः। निभालनम्- दर्शनिक्षणनिध्यान निर्वर्णननिभालनम्। इति वैजयन्ती सभा- सभाद्यूतसमूहयोः। गोष्ठ्यां सभ्येषु शालायाम्। इति हैमः।

**छन्दोलङ्कारादिकम्**- अस्मिञ्छ्लोके-'ज्ञेया वसन्ततिलका तभजा जगौ गः।' इति लक्षणानुसारेण बसन्ततिलकावृत्तम्। अत्रानुप्रासोपमालङ्कारः इति साहित्यविद्याधरी।

**श्लोक २८- द्यामन्तरा वसुमतीमपि --------------- मागतानाम्।।**

**सन्दर्भादिकम्**- महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविः वर्णयति, यत् दमयन्त्याः स्वयम्बरावसरे, तां स्वयम्बरसभामवलोकयितुं देवतानां समूहः स्व-स्व विमानेन द्वारा आगत्य, पृथिव्याकाशयोर्मध्ये स्थितः सन् तेनैव प्रकारेण शोभते स्म येन प्रकारेण उभयोर्लोकयोः मध्ये कश्चनापरो देवलोकः स्यात् कृतः महर्षिणा विश्वामित्रेण। महर्षिः विश्वामित्रः स्वयजमानस्य त्रिशंकोः कल्याणायापरमेव स्वर्गलोकं निर्मित्सितवान् इति हि रामायणादिषु श्रूयते।

**अन्वयः**- गाधिजन्मा धाम् वसुमतीमपिअन्तरा यदि अन्यम् एव नाकलोकं निरमास्यत स यादृक् चारुः अभविष्यत् अवलोकयितुम् आगतानां विमानैः तत् अभ्रम् तादृक् अभूत्।

**व्याख्या**- गाधिजन्मा = गाधेर्जन्म यस्य सः = गाधिजन्मा = विश्वमित्र इति भावः, अवर्ज्यो बहुव्रीहिः व्यधिकरणयोः जन्माद्युतरपदः।' इति वामनः। द्याम् = द्युलोकम् वसुमतीम् = भूलोकमपि अन्तरा = अन्तराले, 'अन्तरा अन्तरेण युक्ते' इति द्वितीया। यदि = चेत् अन्यम् अपरमेव, नाकलोकम् = स्वर्गलोकम्, निरमास्यत = निर्माणमकरिष्यत्, सः = गाधिजन्मना निर्मितः नाकलोकः यादृकं = यादृशः चारुः = मनोहरः, अभविष्यत् = भवेत् अवलोकयितुम् = तां दमयन्त्याः स्वयम्बरसभाम् द्रष्टुम्, आगतानाम् = समागतानाम्, देवादिकानां विमानैः तत् = कुण्डिनपुरस्य स्वयम्बरसभाया उपरिविद्यमानम्, अभ्रम् = आकाशम्, तादृक् = तादृशम् चारू अभूत् = अभवत्। अन्तरिक्षसभाया उपरिविंद्यमानमाकाशमण्डलम् अपरं देवलोकमिवाभात् देवानां विमानैः।।

**समासः**- गाधिजन्मा = गाधेर्जन्म यस्याऽसौ = गाधिजन्मा।

**कोशः**- द्यौः = सुरलाको द्यौ द्विवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्। इत्यमरः। वसुमती-सर्वसहा वसुमती वसुधोर्वी वसुन्धरा। इत्यमरः। नाकः -स्वरव्ययं स्वर्ग नाकत्रिदिवत्रिदशालयाः। इत्यमरः। विमानम्-व्योमयानं विमानोऽस्त्री। इत्यमरः।

**छन्दोलङ्कारादिकम्**- 'ज्ञेया वसन्ततिलका तभजा जगौ गः इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अत्रातिशयोक्तिरलङ्कारः इति साहित्यविद्याधरी। 'अभूतोपमेतिकेचित्' इति जीवातुः।। प्रसादाख्यो गुणः, वैदभीरीतिश्च।

**श्लोक २९- उत्तुङ्गमङ्गलमृदङ्ग ----------- निजताण्डवपण्डितत्वम्।।**

**सन्दर्भादिकम्**- महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितनामकस्य महाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् कुण्डिनपुरस्य प्रासादाः अतीव धवलाः आसन्। तेषामुपरिध्वजा स्थापिताः आसन्। तेषां चञ्चलाः पताका अवलोक्य प्रतीयते स्म यथा तत्रत्या सौधपंक्तिः नर्तकीमण्डली स्यात्। ताश्च तत्र समागतानां राज्ञामाह्लादाय ध्वजहस्तेन द्वारा भावानुकूल-मुद्राप्रदर्शनरूपम् नैजम् ताण्डवपण्डितत्वम् प्रदर्शयन्ति। तथाचोक्तम् भरतमुनिना तण्डुमुनि सम्बद्धित्वात् सर्वं नृत्यं नृत्तं च ताण्डवमित्यभिधीयते

इति। तथाहि, ताण्डवमिति सर्वं नृत्तमुच्यते।' इति।

**अन्वयः** –उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गी सर्वानुवादविधिबोधितसाधुमेधाः सौधस्रजः प्लुतपताकया जनेषु निजताण्डवपण्डिततत्वम् अभिनिन्युः इति मन्ये।

**व्याख्या**– उत्तुङ्गः = अतितारः, मङ्गलमृदङ्गनिनादः = विवाहमार्दङ्गध्वनिः, तस्यभङ्ग.यः = प्रकारविशेषः तासां सर्वः = सकलोऽनुवादिविधिः = सम्पूर्णानुच्चारणविधिः, सकलस्य मृदङ्गशब्दस्य यः प्रतिशब्द विधिरिति यावत् तेन बोधिता = ज्ञापिता साध्वी मेधा लक्षणया गम्भीरता याभिः। लोकेऽपि नर्तक्यो मङ्गलमृदनिनादभङ्गानामनुवादेन स्वीयं नृत्तकौशलं, हस्ताद्यभिनयेन प्रदर्शयन्ति। किञ्च मेधावी गुरूणा व्याख्यातस्यार्थस्यानुवादेन बोधितसाधुमेधः सन् जनेषु स्वीयं पाण्डित्यं प्रकाशयति। एतद्दृव्धाः सौधस्रजः = धवलगृहपंक्तयः प्लुतपताकतया = चलत्पताकतया, जनेषु = जनानां समीपे, निजताण्डव पण्डिततत्वं स्वीयनृत्तचातुर्यम् अभिनिन्युः = अभिनयेन प्रदर्शयामासुः इत्यहं मन्ये।

**समासः**– उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गीसर्वानुवादविधिबोधितसाधुमेधाः = उत्तुङ्गा ये मङ्गलमृदङ्गननिनादाः तद् भङ्गीनां सर्वानुवादविधिना, बोधिता, साध्वी मेधा यासां ताः तथोक्ताः = उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गीसर्वानुवादविधिबोधितसाधुमेधाः। सौधस्रजः = सौधानां स्रजः = सौधस्रजः। प्लुतपताकतया = प्लुताः पताकाः यासां ताः प्लुतपताकाः तासां भावस्तत्ता तया = प्लुतपताकतया। निजताण्डवपण्डिततत्वम् = पण्डितस्य भावः पण्डिततत्वम् निजस्य ताण्डवस्य पण्डिततत्वम् = निजताण्डवपण्डिततत्वम्।

**कोशः**– मंगलम्-श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्। इत्यमरः। मृदङ्गो–मृदङ्गो मुरजः इत्यमरः। निनादः -निनादः निनदोध्वनिरित्यमरः। मेधाः –धीर्धारणावती मेधा इत्यमरः। सौधः = सौधोऽस्त्रीराजसदनम्। इत्यमरः।

**छन्दोलङ्क.ारादिकम्**– 'ज्ञेया वसन्ततिलका तभजा जगौ गः।' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। मृदङ्ग प्रतिध्वनात् पताकाचलनाच्च नर्तकीवत् वाक्यानुवादं हस्ताभिनयं चक्रुरिवेत्युत्प्रेक्षा। सौधपंक्तिषु नर्तकीव्यवहारस्य समारोपात् समासोक्त्यलङ्क..ारश्चेति जीवातुः।माधुर्यत्यो गुणो वैदर्भी रीतिचात्र

**श्लोक ३०**– **एषां त्वदीक्षणरसाद् --------------- पानमपि द्विषास्तु।।**

**सन्दर्भादिकम्**– महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य

महाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके स्वयम्बरसभायां समागतानां देवानां वर्णनं कुर्वन्ती सरस्वती दमयन्तीं वक्ति यत् इमे ये देवा अत्र समुपविष्टाः सन्ति तवाभिलाषिणः त्वां दृष्ट्वा ते स्वभावतः निर्निमेषा अपि द्विगुणितनिर्निमेषतां गताः सन्ति निश्चयेन तव मुखचन्द्रे अधरामृतपानावसरे तेषाममृतदानमपि द्विगुणितं भविष्यति। अत्र सरस्वत्या अभिप्रायो विद्यते यत् तवाकर्षण परतन्त्रेभ्य एतेभ्यो देवेभ्यः चन्द्रामृतादपि तवाधरामृतपानमधिकं काम्यमास्ते। अतएवामृतपायिन अपि ते त्वां कामयन्ते।

**अन्वयः-** मुग्धे! एषां त्वदीक्षणरसात् एषा अनिमेषता स्वाभाविकानिमिषतामिलिता यथा द्विधा अभूत् तथा एव ननु तव आस्ये विधौ अधरोपभोगैः अमृतपानमपि अस्तु।

**व्याख्या-** मुग्धे = हे सुन्दरि! एषाम् = एतेषाम् समेषां देवानाम् त्वदीक्षणे = तवावलोकने, रसात् = अनुरागात्, एषा = इयम् प्रत्यक्षमनुभूयमाना अनिमेषता = निमेषराहित्यं यथा स्वभाविक्या = नैसर्गिक्या अनिमेषतया = निर्निमेषतया। न निमि षतीत्यनिमिषा अत्र 'इगुपधलक्षणं कः तस्य भावस्तत्ता तया मिलिता = संगाता, यथा = येन प्रकारेण, द्विधा = द्विगुणिता अभूत् संजाता तथा एव = तेनैव प्रकारेण, ननु-निश्चयेन तव = दमयन्त्याः आस्ये = मुखे एव विधौ = चन्द्रे = मुख चन्द्रे इति भावः। अधरोपभोगैः = अधरामृतपानैः, मिलितं सत् अमृतपानम् = पीयूषपानमपि अस्तु = द्विगुणितं भवतु। अयमाशयो यत् येन प्रकारेण निसर्गतो, निमेषरहिता अपि देवा यथा त्वद्दर्शनकार्येण निमेषशून्याः संजाताः तथा चन्द्रामृतपायिनोऽपि ते त्वदधरपयिनो भवन्तु।

**समासः-** त्वदीक्षणरसात्-त्वदीक्षणे रसात् = त्वदीक्षणरसात्। स्वाभाविकानिमिषतामिलिता = स्वभाविकी या अनिमिषता तया मिलिता। अधरोपभोगैः = अधरस्य उपभोगैः = अधरोपभोगैः। अमृतपानम् = अमृतस्य पानम्. = अमृतपानम्।

**कोश-** अमृतम् = पीयूषममृतं सुधा। इत्यमरः। विधुः = विधुः सुधांशु शुभ्रांशुरोषधीशो निशापतिः। इत्यमरः। मुग्धः -मुग्धो मूढे रम्ये। **रसः** - रसः स्वादे जले वीर्ये श्रृङ्गारादौ विषद्रवे। चोले रोगे देहधातौ तिक्तादौ पारदेऽपि च।। इति हैमः।

**छन्दोलङ्कारादिकम्-** अत्रानिमिषत्वामृतपानयोः द्वैविध्यासम्बन्धेऽपि

तत्संबन्धोक्तेरतिशयोक्तिः। 'ज्ञेया वसन्ततिलका तभजा जगौ गः।' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्।अत्र वैदभीरीतिः माधुर्यप्रसादाख्यौ गुणौ च।

**श्लोके ३१- एषां गिरेः सकलरत्नफलः ---------- छुरितःपयोधेः।।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् सरस्वती दमयन्त्याः स्वयम्वरसभायां तत्रागतानां देवानां वर्णनं कुर्वन्ती दमयन्तीमाह यत् एतेषां देवानां सुमेरूपर्वत एव पर्वतः सकलफलप्रदः कल्पवृक्ष एव तस्य सुमेरूपर्वतस्य वृक्षः। कल्पवृक्षहस्तेनैव सुमेरूपर्वतः पृथ्वीं धेनुं कृत्वा सर्वाणि रत्नानि दोग्धि स्म। क्षीरसागरात् समुत्पन्नोऽयं वृक्षः मुक्ताफलमेव फलति।

**अन्वयः** -सकलरत्नफलैः फलनसान्वयं नाम मुक्ताफलं तन्वन् एषां सः तरुः प्राक्दुग्धभूमि सुरभेः गिरेः पयोभिः विन्दुभिः छुरितः पञ्चशाख इवाभाति।

**व्याख्या-** सकलरत्नफलः = सकलानि = सम्पूर्णानि रत्नानि = माणिक्यादीनि एव फलानि यस्याऽसौ तथाविधः = सकलरत्न प्रसूतिरितिभावः। फलनं = सस्यत्वेन सम्पादनम्, फलनिष्पताविति धातोर्ल्युट्। तेन सान्वयम् = अन्वर्थ नाम यस्य तन्मुक्ता फलं तन्वन् तादृशं मुक्ताफलं कुर्वन्। अयमाशयः मुक्ताफलं तु शुक्त्यादिभ्यो जायते अत एव तस्य फलत्वं नोपपद्यते किन्तु कल्पवृक्षप्रसूतत्वेनैव तस्य फलत्वमुपपन्नं तेन च मुक्तफलमिति अन्वर्थसंज्ञा भवति। एषाम् = देवानाम् सः = प्रख्यातः तरुः = कल्पवृक्षः, प्राक् = पूर्वम् दुग्धा भूमिरेव = पृथ्वी एव सुरभिः = गौः। गोरूपधरा भूमिः ओषधिरत्नानिदुग्धा इति भावः। तेन तस्य गिरेः = ससुमेरूनामकस्य पर्वतस्य पयोभिः = क्षीररूपैः विन्दुभिः छुरितः = सर्वतोव्याप्तः पञ्चशाखः = पाणिरिवाभाति खलु इत्युत्प्रेक्षा। सोऽयं कल्पवृक्षो देवानां वृक्षो वर्त्तते। स चापि तव हस्तगतो भविष्यतीति भावः।

**समासः-** सकलरत्नफलः = सकलानि रत्नानि फलानि यस्याऽसौ = सकलरत्नफलः। फलनसान्वयनाम = फलनेन सान्वयं नामयस्याऽसौ। दुग्धभूमिसुरभेः = प्राग्दुग्धाभूमिरेव सुरभिः तस्याः।

**कोशः-** रत्नम्-रत्नं स्वजातिश्रेष्ठे स्यात् मणौ। इति हैमः। फलम्- फलं हेतुकृते जातीफले फलकसस्ययोः। त्रिफलायां चकक्कोलेशस्त्रागे व्युष्टिलाभयोः

इति हैमः। तरूः -वृक्षोमहीरूहः शाखी विटपी पादपस्तरूः इत्यमरः। गिरिः-अद्रिगोत्रगिरिग्रावाचलाशैलशिलोच्चयाः। इत्यमरः।। पञ्चशाखः -पञ्चशाखः शयः पाणिः। इत्यमरः।

**छन्दोऽलङ्कारादिकम्**- 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इतिलक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। उत्प्रेक्षालङ्कारश्च।

**श्लोक ३२- वक्त्रेन्दुसन्निधिनिमीलि ------------ कृपयान्वमानि।।**

**सन्दर्भादिकम्**- महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरित महाकाव्यस्यैकादशसर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् सरस्वती दमयन्त्याः समक्षम् स्वयम्बरसभायामुपविष्टानां देवानां वर्णनमकार्षीत्। तच्छ्रुत्वा मया देवानामपराधो माभूत् कृतः इति भिया दमयन्ती देवान् शिरसा नमश्चकार। तदवलोक्य प्रसन्नाः देवाः तामन्यत्र गन्तुमनुमतिं ददुः।

**अन्वयः** -अत्र वक्त्रेन्दुसन्निधिनिमीलदलारविन्दद्वन्द्वभ्रमक्षमम् अञ्जलिम् आत्ममौलौ कृत्वा अपराधभयचञ्चलमीक्षमाणा सा अमरैः कृपया अन्यत्र गन्तुम् अन्वमानि।

**व्याख्या**- अथ = सरस्वतीवर्णनानन्तरं वक्त्रेन्दुसन्निधिनिमीलिदलारविन्दद्वन्द्वभ्रमक्षमम् वक्त्रम् = मुखमेव, इन्दुः = चन्द्रः आह्लादकत्वात् तस्य सन्निधिना = सन्निधानेन, निमीलीनि = संकुचितानि दलानि = पत्राणि ययोस्तयोः अरविन्दयोः = कमलयोः, द्वन्द्वस्य = युग्मस्य भ्रमक्षमम् = भ्रान्ति जननसमर्थम् संकुचितदलपद्मयुगलसदृशमित्यर्थः। अञ्जलिम् = प्रणामाञ्जलिम्। उक्तञ्चापि - अञ्जलिः परमामुद्रा सद्यो देवप्रसादिनी। इति। आत्ममौलौ = आत्मनः स्वस्य, मौलौ = शिरसि कृत्वा = विधाय, देवान् प्रणम्य इति भावः, अपराधभयचञ्चलम् = अपराधात् अवरणाद् हेतोः। जन्यं यद्भयम् = भीतिः, तेन चञ्चलम् = चपलं यथा स्यात्तथा, ईक्षमाणा = अवलोकयन्ती, सा = दमयन्ती, अमरैः = देवैः, कृपया = दयापूर्वकम्, अन्यत्र = देवान् विहाय मनुष्यदिषु, गन्तुम् = यातुम्, अन्वमानि = अनुमताऽभूत्।

इयम् दमयन्ती मनुष्यजातावेवानुरागिणी 'स्वगणे परमा प्रीतिः' इति ज्ञात्वा, यत्र ते स्नेहः तमेव वृणु मा भैषीः इति कृपयानुमताभूत् भैमी देवैरितिभावः।

**समासः**- अपराधभयचञ्चलम् = अपराधस्य भयेन, चञ्चलम् = अपराधभयचञ्चलम्। वक्त्रेन्दुसन्निधिनिमीलदलारविन्दद्वन्द्वभ्रमक्षमम् = वक्त्रमेव

इन्दुः तस्य सन्निधिना निमीलीनि दलानि ययोः अरविन्दयोः द्वन्द्वम् तस्य भ्रमक्षमम् = वक्त्रेन्दुसन्निधि निमीलदलारविन्दद्वन्द्वभ्रमक्षमम्।

**कोशः–** अथ–अथ समुच्चये। मङ्गले संशयात्माधिकारानन्तरेषु च। अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि। इति हैमः। वक्त्रम्–वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्। इत्यमरः। इन्दुः = हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः। इत्यमरः। अरविन्दम्–वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्। इत्यमरः। द्वन्द्वम्–द्वन्द्वमाहवे। रहस्ये मिथुने युग्मे दवदावौ वनानले। वने। इति हैमः।

**छन्दोलङ्कारादिकम्–** 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अत्राञ्जलौ वक्त्रेन्दुसन्निधिसंकुचितारविन्दयुगलभ्रान्तिवर्णनात् रूपकानुप्राणितो भ्रान्तिमदलङ्कारः इति सङ्करः। इति जीवातुः।गौणीयचात्र रीतिः।

**श्लोक ३३– जन्याः ततः फणभृतामधिपं ----------- गमयाम्बभूवुः।**

**सन्दर्भादिकम्–**महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविः वर्णयति यत् देवानामनुमतिं प्राप्तेरन्तरं शिविकावाहकाः जनाः मञ्जीष्ठरागरञ्जितपादौष्ठीं दमयन्तीं नागाधिपस्य समक्षम् आनयामासुः।

**अन्वयः–** ततः जन्याः मञ्जिष्ठमञ्जीमविगाहियदौष्ठलक्ष्मीं ताम् नवीनाः धनाः निखिलवारिझरात् हंसावलीं मानसम् इव सुरौघा फणिभृताम् अधिपं गमयाम्बभूवुः।

**व्याख्या–**ततः = तदनन्तरम्, जनीं वहन्तीति जन्याः जन्याः बधूभृत्याः, 'संज्ञायां जन्याः इति यत्प्रत्य यान्तो निपातः। माञ्जिष्ठमञ्जीमविगाहिपदौष्ठलक्ष्मीम् = मञ्जिष्ठया रागद्रव्यविशेषण रक्तं माञ्जिष्ठम्। तेन 'रक्तम्' इत्यनप्रत्ययः तस्य मञ्जिमानं रामणीयकम् विगाहते इति तद्विगाहिनी। तादृशरक्तवर्णेत्यर्थः पादयोः ओष्ठयोश्च = चरणरदनच्छदयोः लक्ष्मीः = शोभा यस्यास्ताम् मञ्जिष्ठमञ्जिमविगाहिपदौष्ठलक्ष्मीम् ताम् = दमयन्तीम् नवीनाः = नवीनतया वर्षाकाले समुत्पन्नाः, घनाः = मेघाः, निखिलवारिझरात् = निखिलात् = सकलात्, वारिझरात् = जल प्रवाहात्, हंसावलीम् = हंसानाम् = राजहंसानाम्, अवलीम् = समूहम्, मानसम् = मानसरोवरम् = इव, सुरौघात = सुराणां = देवानाम्, सुराणाम् ओघात् = समूहात्, देवसमूहं परित्यज्येति भावः, 'जलधरसमये मानसं यान्ति हंसाः।' इति कविप्रसिद्धिः, फणिभृताम् = फणीन्

विभ्रति ये ते तान् तेषाम् अधिपम् = स्वामिनं वासुकीम्, गमयाम्बभूवुः = आनयामासुः।

**समासः**- माञ्जिष्ठमर्ज्जिमविगाहिपदौष्ठलक्ष्मीम् = मञ्जिष्ठया रक्तं माञ्जिष्ठम् तस्य मञ्जिमानं विगाहते या पादयोः ओष्ठयोः लक्ष्मीः यस्याः सा ताम् = माञ्जिष्ठमञ्जमविगाहिपादौष्ठलक्ष्मीम्। निखिलवारिझरात् = निखिलात् वारिझरात् = निखिलवारिझरात्। सुरौघात् = सुराणाम् ओघ सुरौघः तस्मात् = सुरौघात्। फणिभृताम् = फणीन् विभ्रति ये ते तेषाम् फणिभृताम्।

**कोशः**- जन्याः = जन्याः भृत्याः नवोढायाः इति केशवः। सुराः = अमरानिर्जराः देवाः त्रिदशाः विबुधाः सुराः। इत्यमरः। मञ्जिष्ठा- मञ्जिष्ठा विकसा जिङ्गी समङ्गा। कालमेषिका। मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि। इत्यमरः। पादः = पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्। इत्यमरः। घनः -घनजीमूतमुदिरजलमुग्धूमयोनयः। इत्यमरः।

**छन्दोलङ्कारादिकम्**- 'ज्ञेया वसन्ततिलका तभजा जगौ गः इति लक्षणानुसारेणात्र वसन्ततिलका नाम वृत्तम्।

**श्लोक ३४- न्यग्रोधनादिवदिवः ---------- शिखिपत्रबमातपत्रम्।।**

**सन्दर्भादिकम्**- महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्य एकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके महाकविः वर्णयति यत् यदा दमयन्ती पुष्करद्वीपाधिपतेः समक्षं जगाम, तदा तस्यै राज्ञां वर्णनं कुर्वन्ती सरस्वती तामाह यत् अयं पुष्करद्वीपाधिपतिरास्ते। आकाशाद् आगच्छन्तं घर्मरोधकं वटं यदि दिदृक्षसि तदा एनं वरय। अयं द्वीपः सर्वान् द्वीपानाच्छाद्य छायां ददाति अतएव पुष्करद्वीपशब्देनाभिधीयते। स च द्वीपः दर्शनीयो वर्त्तते।

**अन्वयः**- दिवः पतदातपादेः न्यक् रोधनात् इव न्यग्रोधम् अवरोहैः आत्मभरधारम् इव तं पाकिफलनीलदलद्युतिभ्यां शिखिपत्रजम् तस्य द्वीपस्य आतपत्रं पश्य।

**व्याख्या**- दिवः = अन्तरिक्षात् पततः = आपततः आतपादेः = घर्मादेः आदिशब्दाद् वर्षा श्च, न्यक् = निम्नीभूय रोधनात् = निवारणात् इव न्यग्रोधम् = न्यग्रोधशब्दवाच्यम् उत्प्रेक्षेयम् उत्तरार्द्धे वक्ष्यमाणातपत्रत्वोत्प्रेक्षोपयोगिनी। अवरोहन्तीत्यवरोहाः शाखाभ्य अधोभागलम्बिन्यः शिफाः। तैः, अवरोहरूपैरवष्टाम्भैरित्यर्थः। आत्मभरधारम्-आत्मनः = निजस्य, भरम् भारम्, धरतीतिधारः तम् = आत्मभरधारम् । आत्मानमवष्टभ्यस्थितम् इति भावः।

तम् = पाकिफलनीदलद्युतिभ्याम् = पाकःएषामस्तीति पाकी। पाकिनां = परिपक्वानाम् फलानाम् नीलदलानाम् = हरिद्वर्णपत्राणाम् च द्युतिभ्याम् = रक्तवर्णनीलवर्णकान्तिभ्याम् शिखिपत्रजम् = मयूरचिच्छोद्भूतम्, आतपत्रम् आतपत्रवत् स्थितम्। तम् = प्रख्यातम् न्यग्रोधवृक्षं पश्य = अवलोकय। एतस्य राज्ञो वरणेन एव विद्योद्भुतदर्शनोत्सवलाभो भविष्यतीति भावः।

**समासः** –पतदातपादेः = पततः आतपादेः = पतदातपादेः। आत्मभरधारम् = आत्मनः भरस्य धारम् = आत्मभरधारम्। पाकिफलनीलदलद्युतिभ्याम् = पाकः अस्ति एषामिति पाकी, पाकिनाम् फलानाम् नीलानाम् दलानाञ्च द्युतिभ्याम् = पाकिफलनीलदलद्युतिभ्यां। शिखिपत्रजम् = शिखिनः पत्रम् = शिखिपत्रम् तज्जम् = शिखिपत्रजम्।

**कोशः**– दिव् = द्यौ दिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्। इत्यमरः। शाखा – शाखाशिफावरोहः स्यात्, इत्यमरः। आतपः = प्रकाशो द्योत आतपः। इत्यमरः। न्यग्रोधः = न्यग्रोधो बहुपाद्वटः इत्यमरः।

**छन्दोलङ्कारादिकम्**– 'ज्ञेया वसन्ततिलका तभजा जगौ गः इति लक्षणानुसारेण वसन्तलिकावृत्तम्। अत्र पूर्वार्द्धोत्तरार्द्धयोरूभयोरेवोत्प्रेक्षा। तत्र पूर्वार्द्धे विद्यमानोत्प्रेक्षा उत्तरार्द्धपेक्षाया उपयोगिनी। तत्र = उत्तरार्द्धेनिमित्तगुणजातिरूपोत्प्रेक्षा व्यञ्जकाप्रयोगाद् गम्या अस्याश्च प्रथमोत्प्रेक्षयाऽङ्गागङ्गिभावेन सजातीयसङ्करः द्वितीयया सजातीयसंसृष्टिः।

**श्लोक ३५**– **न श्वेततां चरतु वा भुवनेषु ---------- पृथगातनोति।**

**सन्दर्भादिकम्**– महाकविना श्रीहर्षेण कृतस्य नैषधीय चरितमहाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके स्वयम्बरसभायामागतस्य पुष्करद्वीपाधिपतेः सवनराजस्य वर्णनं करोति सरस्वती दमयन्त्याः समक्षम् यदयं राजाऽतियशस्वी वर्त्तते। अस्य कीर्तिहंसी सम्पूर्णे विश्वे यथेच्छं विचरति। किन्तु हंसी सत्यपीयं नीरक्षीरविवेकं नहि करोति।

**अन्वयः** –अस्य राजहंसस्य प्रियतमा कीर्तिः कथं न श्वेततां भुवनेषु वा चरतु? चित्रं तु यत् विशदिमाऽद्वयं आविशन्ती क्षीरम् आम्बुच मिथः पृथक् न आतनोति।

**व्याख्या**–अस्य = पुर उपविष्टस्यांस्यां स्वयम्बरसभायाम्, राजहंसस्य = राजश्रेष्ठस्यास्य सवनराजस्य, प्रियतमा = अभिप्रेततमा कीर्तिः = यशः। अन्यत्र राजहंसस्य = राजसुश्रेष्ठस्यकीर्तिः = कीतिस्वरूपा, प्रियतमा = अतिशयेन प्रिया वरटा कथमऽकस्मात् कारणात् न = नहि, श्वेतताम् = धवलिमानम्,

यातु, भुवनेषु = लोकेषु, वा अथवा, चरतु = सञ्चरणं करोतु। तु = किन्तु, विशदिमाऽद्वयम् = धवलिमाऽद्वयम्। आदिशन्ती = उत्पादयन्ती कीर्तिरिति शेषः स्वप्रभयेतिभावः। क्षीरञ्च = दुग्धञ्च, अम्बुच = जलञ्च मिथः = परस्परम् पृथक् = विभक्तम्, न = नहि, आतनोति = करोति। इति यत् तच्चित्रम्। हंसानां नीरक्षीरविवेकः स्वाभाविकः। तच्चास्यां सवनराजकीर्तिहंस्यां नावलोक्यते इति आश्चर्यस्य विषयः।

**समासः** – विशदिमाऽद्वयम् = विशदिम्नः अद्वयम् = विशदिमाऽद्वयम्।

**कोशः** –राजहंसः –राजहंसोनृपश्रेष्ठे कादम्बकलहंसयोः इत्यमरः। कीर्तिः – यशः कीर्तिः समज्ञाच। इत्यमरः। क्षीरम् = अम्भोऽर्णस्तोयपानीय नीरक्षीराम्बुशम्बरम्। इत्यमरः। मिथः –मिथोऽन्योन्यं रहस्यपि। इत्यमरः।

**छन्दोलङ्कारादिकम्**– 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। हंसानां क्षीरनीरविवेकस्य जातिधर्मत्वेऽपितद्विवेकाभावो विरूद्ध इति भावः। सचाविवेकः कीर्त्तेर्धावल्येन तत्रत्यजलानामपि क्षीरसदृशशुक्लत्वात् धावल्यगुणतो नस्वरूपत इति विरोधभानाद्विरोधाभासोऽलङ्कारः, तथा विशदिमाऽद्वयमादिशन्तीत्यनेन सामान्यालङ्कारः। 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता।' इति तस्य विशेषणगत्या क्षीरनीराविवेकहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं. पूर्वार्द्धे च श्वैत्यभुवनचारित्व राजहंसप्रियतमात्वाख्या श्लिष्टौ श्लिष्टप्रस्तुतकीर्तिविशेषणसाम्यात् प्रस्तुतराजहंसप्रतीतेः, श्लेष संकीर्णार्थसमासोक्तिरित्यैतेः त्रिभिः सहाङ्गाङ्गिभावेन पूर्वोक्तस्य विरोधाभासस्य सङ्करः। अत्रवेदर्भीरीतिः। प्रसादमाधुर्याख्यौ गुणौ।

**श्लोक ३६– क्षीरार्णवस्तव कटाक्षरूचि ---------- चापलाभ्याम्।।**

**सन्दर्भादिकम्**– महाकविना श्रीहर्षेण प्रणीतस्य नैषधीय चरितमहाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके सरस्वती बालारूपधारिणी दमयन्त्याः समक्षम् शाकद्वीपराज्ञः प्रशंसां कुर्वन्ती वक्ति यदयं द्वीपः क्षीरोदेनावृत्त आस्ते समुद्रस्य तटे वनानि सन्ति, तानि च प्रतिबिम्बितानि भवन्ति समुद्रजले, येन समुद्रस्य वीचयो नानावर्णाः भवन्ति मनोज्ञाश्च। दमयन्त्याः नेत्रेऽपि चपले स्तः मनोज्ञे च। इदानी यावत् तु क्षीराम्बुधेः वीचयः अबद्धाः इव सन्ति। यदा त्वम् तत्र यास्यसि तदा तव नेत्रयोः चापल्येन शिक्षितास्ताः व्यवस्थिताः मनोज्ञतमाश्च भविष्यन्तीति भावः।

**अन्वयः** -आयताक्षि तत्र क्षीरार्णवः तटकटाक्षरूचिच्छटानां विकटायितम् वेलावनीवनततिप्रतिम्बिचुम्बिकिर्मिरितोर्मिचयचारिम चापलाभ्याम् अध्येतु।

**व्याख्या**- हे आयताक्षि = हे विशालनेत्रे दमयन्ति! तत्र = शाकद्वीपे, क्षीरार्णवः क्षीरसागरः। तव = दमयन्त्याः। कटाक्षरूचिच्छटानाम् = कटाक्षाणाम् = तिर्यगवलोकनानाम्, या रूचयः = कान्तयः तासां छटानाम् = शोभानाम्, विकटायितम् = विशालभावम् सौन्दर्यविलसितमितिभावः। वेलावनीवनततिप्रतिबिम्बचुम्बिकिर्मिरितोर्मिचयचारिमचापलाभ्याम् = वेलायाः = वारिधेः कूलस्य, अवनी = भूमिः तत्र या वनततिः = वनपंक्तिः, तस्याः प्रतिबिम्बम् चुम्बति = स्पृशति इति चुम्बी तस्य = तद्‌युक्तस्य इति यावत् अतएव किर्मिरितस्य = कर्बुरितस्य, ऊर्मिचयस्य = वीचिसमूहस्य, चारिमा = चारूता, चापलम् = चाञ्चल्यं च ताभ्यां स्मारकाभ्यां अध्येतु = स्मरतु अनुकरोतु इति यावत्, तव चक्षुषोः कटाक्षेषु परितः श्वैत्यं मध्ये नीलत्वं चपलता च अतः क्षीरसमुद्रोऽपि तत्सदृशो भवतु इति भावः।

**समासः**-आयताक्षि = आयते अक्षिणी यस्याः सा तत्सम्बुद्धौ आयताक्षि। कटाक्षरुचिच्छटानाम्। कटाक्षाणं या रुचयः तासां छटानाम् = कटाक्षरुचिच्छटानाम्। वेलावनीवनतति प्रतिबिम्ब-चुम्बिकिर्मिरितोर्मिचय -चारिमचापलाभ्याम् = वेलायाः या अवनी, तस्या या वनततिः, तस्या प्रतिबिम्बं चुम्बतीति = वेलावतनीवनततिप्रतिविम्बचुम्बी अतएव किर्मिरितस्य ऊर्मिचयस्य चारिमा चपलता च ताभ्याम् = वेलावनीवनततिप्रतिविम्ब-चुम्बिकिर्मिरितोर्मिचय चारिमचापलाभ्याम्।

**कोशः** -जालम् = वृन्दं जालं चक्रवालं जालकण्टकं घटा। इति वैजयन्ती। विकटम् विशालेविकराले च विकटं कवयो विदुः। इति शाश्वतः। किर्मीर = चित्रं किर्मीरकल्माषशवलैतश्च कर्बुरं। इत्यमरः।

**छन्दोऽलङ्कारादिकम्**- 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अत्र किमीरितोर्मिचयस्य सितासितत्वसादृश्यात्। तद्विलासस्य कटाक्षविलसितस्मारकत्वात् स्मरणालङ्कारः।

**श्लोक ३७- वैदर्भिदर्भदलपूजनयापि ------ जननाभिजनःसदेशः।।**

**सन्दर्भादिकम्**-महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्यैकादशात् सर्गादुद्धृतेऽस्मिञ्श्लोके दमयन्त्याः स्वयम्बरसभायां समागतानां राज्ञां परिचयमुपस्थापयन्ती भगवती सरस्वती क्रौञ्चद्वीपाधिपस्य परिचयमुपस्थापन्ती

वक्ति यत् अयं राजा तस्य द्वीपस्याधिपतिर्वर्त्तते, यत्र कुशपत्रैरपि भगवतः शङ्करस्य पूजनं कृत्वा, संसारचक्रे नह्यायाति जनः। सोऽयं देशः भगवतः शङ्करस्यार्चकानां विद्यते।

**अन्वयः** -वैदर्भि! यस्य दर्भदलपूजनया अपि जनः जातु पुनः मातुः गर्भेनउदेति तत्र तस्य मृगाङ्कमौलेः अर्चनां रचय सः देशः तन्मात्र दैवतजनाभिजनः।

**व्याख्या** -हे वैदर्भि! = हे दमयन्ति! यस्य = क्रौञ्च द्वीपाधिदैवतस्य भगवतः शङ्करस्य, दर्भदलपूजनया = दर्भाणां = कुशानां, दलानि = पत्राणि, तैः अर्चनयां = पूजनया अपि किमुत कमलदलादिपूजनयेति भावः। जनः = जीवः, जातु = कदाचिदपि, पुनः = भूयः, मातुः = जनन्याः, गर्भे = उदरे न = नहि उदेति = आयाति। संसारचक्राद् विमुक्तत्वात् पुनर्जन्म न लभतेऽस्यां भवाटव्याम्। तत्र = क्रौञ्चपर्वते, तस्य = रूद्ररूपेण क्रौञ्चपर्वते स्थितस्य भगवतो जनार्दनस्य। तथा चोक्तमपि ब्रह्मपुराणे-भगवान् पुष्काराद्यैर्जनार्दनः। ध्यानयोगैः रुद्ररूपः पूज्यते यज्ञसन्निधौ।' इति। मृगाङ्कमौलेः = मृगाङ्कः = चन्द्रः मौलौ = मूर्धनि यस्याऽसौ तस्य = मृगाङ्कमौलेः = चन्द्रमौलेः शङ्करस्य इति यावत् । अर्चनम् = पूजनम्, रचय = कुरु। एनम् क्रौञ्चाधिपतिं स्वपतिं कृत्वेति भावः। सः क्रौञ्चाख्यः, देशः = राष्ट्रम्, तन्मात्रदैवताभिजनः तन्मात्रम् = स् एव = शिव. एवैक इत्यर्थः दैवतम् = देवता आराध्यो देवो येषां तेषां जनानाम्, अभिजनः = अभिजायते अस्मिन्निति अभिजनः = जन्मभूमिः वर्त्तते इति शेषः।

**समासः** -दर्भदलपूजनया = दर्भणां दलानि तैः पूजनया = दर्भदलपूजनया। मृगाङ्क.मौलेः = मृगाङ्कः मौलौ यस्यऽसौ तस्य = मृगाङ्क.मौलेः। तन्मात्रदैवतजनाभिजनः = तन्मात्रं दैवतं येषां जनानां तेषाम् अभिजनः = तन्मात्रं दैवतजनाभिजनः।।

**कोशः** -अभिजनः -ख्यातः कुलेऽप्यभिजनो जन्मभूम्यां कुलध्वजे। इति विश्वः। **दर्भः** -अस्त्री कुशं कुथोदर्भः पवित्रम्' इत्यमरः, जातु- कदाचिज्जातु' इति अमरः। **जनः** -जनो लोके जगद्भेदे पृथग्जने।'

**छन्दोलङ्कारादिकम्**- 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अत्रार्थान्तरन्यासालङ्कारः।

**श्लोके ३८- तस्मिन् मलिम्लुच इव -------------- तरुणि छिनत्तु।**

**सन्दर्भादिकम्** -महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य एकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके स्वयम्वरसभायां समागतानां सर्वेषां राज्ञां वर्णनं समुपस्थापयन्ती सरस्वती दमयन्तीं क्रौञ्चद्वीपाधिपतेः परिचयं कारयन्ती वक्ति यत् अस्मिन् द्वीपे दधिसमुद्रो वर्त्तते। तस्य समुद्रस्य वीचिस्पृष्टः शीतलो वायुः तव कामक्रीडाजन्यं स्वेदविन्दुं शोषयतु। अतएवैनं राजानं त्वं वरयेति भावः।

**अन्वयः** -तरुणि तस्मिन् दधिमहोदधिपूरलोल कल्लोलचामरमरूत् मलीम्लुच इव जालैः मिलन् ते स्मरकेलिजन्मघर्मोदविन्दुमय मौलिक्तमण्डनं छिनत्तु।

**व्याख्या** -हे तरूणि = हे उद्भूतयौवने! तस्मिन् = क्रौञ्चद्वीपे दधिमहोदधिपूरलोल कल्लोलचारमरूत् दधिमहोदधेः = दधिमहासागरस्य पूरे = प्रवाहे लोलाः =चञ्चलाः, ये कल्लोलाः = तरङ्गाः त एव चामराणि तेषां मरूत् = वायुः, मलीम्लुच इव = स्तेन इव। जालैः = गवाक्षमार्गैः, मिलन् = अन्तश्चरः सन्, ते = तव, स्मरकेलिजन्मघर्मोदविन्दुमयमौक्तिकमण्डनम् = स्मरकेल्या = कामक्रीडया, जन्म = उत्पतिः यस्याऽसौ तथाविधं धर्मोदविन्दुमर्य = स्वेदजलविन्दुस्वरूपम् मौक्तिकमण्डनम् = मुक्ताहारम् छिनत्तु = वारयतु।। चौराः हि केनचिच्छिद्रेण प्रविश्यहारादिकं छित्त्वा पलायन्ते अस्मिन् वृते सति राजनि दधिसागरवायुना तव रति श्रमो न भविष्यति इति भावः।

**समासः** -दधिमहोदधिपूरलोलकल्लोलचामरमरुत्-दध्नः महोदधिः पुरलोलाः ये कल्लोलाः त एव चामराणि तेषां मरुत् = दधिमहोदधिपूरलोल-कल्लोलचामरमरुत्। स्मरकेलिजन्मघर्मोद -विन्दुमयमौक्ति-कमण्डनम् = स्मरस्य केल्या जन्म यस्याऽसौ तथाविधः घर्मोदविन्दुः तन्मयम् मौक्तिकमण्डनम् = स्मरकेलिजन्मघर्मोदविन्दुमयमौक्तिकमण्डनम्।

**कोशः**- तरूणी-तरूणी युवती समे। इत्यमरः। पूरः -पूरः स्यादम्भसां वृद्धौ व्रणसंशुद्धिखाद्ययोः इति हैमः। मलीम्लुचः- चोरैकगरिकस्तेनदस्युतस्करमोषकाः। प्रतिरोधिपरास्कन्दि पाटच्चरमलिम्लुचाः। इत्यमरः।

**छन्दोलङ्कारादिकम्**- 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अन्नरूपकोपमयोरङ्गाङ्गिभावेन सङ्करः।

**श्लोक ३९ वातोर्मिदोलनचलद् ---------------- नेत्रनिपीयमानः।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके स्वयम्बरसभायामागतानां राज्ञां वर्णनं कुर्वन्ती सरस्वती वक्ति यत् यदा त्वमेनं कुशद्वीपाधिपतिं वरिष्यसि तदा द्वीपं तं गत्वा त्वमेकं नवीनं दृश्यमवलोकयिष्यसि। तस्मिन् द्वीपे कुशाः अनेन प्रकारेण समृद्धास्सन्ति येन तेषाम् तीव्रेण दृढेन च दलाग्रेण मेघाः सर्वदा विद्धाः भवन्ति। तेभ्यो जलं सर्वदा स्रवति सिञ्चति च कुशमूलम्।

**अन्वयः-** तत्र अम्बरचूम्बिचूडः वातोर्मिलोलनचलद्दलमण्डलाऽग्रभिन्नाऽभ्रमण्डलगलज्जलजातसेकः नेत्रनिपीयमानः कुशस्य स्तम्बः तव चित्राय भविता।

**व्याख्या-**तत्र = कुशद्वीपे, अम्बरचुम्बिचूडः = अम्बरम् = आकाशं चुम्बन्ति = स्पृशन्ति चूडाः = अग्रभागाः यस्याऽसौ तथाविधः = अम्बरचूम्बिचूडः = अभ्रंकषाग्रः अतएव वातेर्मिपोलनचलद्दलमण्डलाग्रभिन्नाभ्रमण्डलगलज्जलजातसेकः = वातस्य = पवनस्य, ऊर्मिणा = तरङ्गेण, लोलनेन = कम्पनेन, चलद्भिः = चञ्चलैः, दलैः = पत्रैः कुशानां पत्रैरिति भावः मण्डलाग्रैः = निस्त्रिंशैः कुशलरूपैरित्यर्थः भिन्नः = विदीर्णः, यद् द्यभ्रमण्डलम् = मेघमण्डलम् तस्मात् स्रवद्भिः = जलैः = उदकैः जातः = सम्पन्नः सेकः = सिञ्चनम् यस्याऽसौ तथाविधः, नेत्रनिपीयमानः = नेत्राभ्याम् = अक्षिभ्याम्, निपीयमानः = सस्नेहमवलोक्यमानः सन् कुशस्य = दर्भस्य स्तम्बः = अग्रकाण्डः तव = भवत्याः दमयन्त्याः, चित्राय = आश्चर्याय भविता = सम्पत्ता।

**समासः -** अम्बरचुम्बिचूडः = अम्बरं चुम्बन्ति चूडाः यस्याऽसौ तथा विधः = अम्बरचुम्बिचूडः।।

वातोर्मिलोलनचलद्दलण्डलाग्रभिन्नाभ्रमण्डलगलज्जलजातसेकः = वातस्य ऊर्मिणा लोलेन चलद्भिः दलैः अतएव मण्डलाग्रैः भिन्नं यत् अभ्रणां मण्डलं तस्मात् गलत् यज्जलम् तेन जातः सेकः यस्याऽसौ तथाविधः = वातोर्मिलोलनचलददलमण्डलाग्रभिन्नाभ्रमण्डलगज्जलजातसेकः। नेत्रनिपीयमानः- नेत्राभ्यां निपीयमानः = नेत्र निपीयमानः।

**कोशः-** मण्डलाग्रः -खड्गे तु निस्त्रिंशचनहासा रिष्टियः। कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्। इत्यमरः। स्तम्बः-अग्रकाण्डे स्तम्बगुल्मौ इत्यमरः। चित्रम् = चित्रं खे तिलकेऽद्भुते। आलेख्ये कर्बुरे। चूडा-चूडा

शिखाग्रयोः बाहुभूषा बलभ्येश्च। इति हैमः। कुशः-अस्त्री कुशं कुथोदर्भः पवित्रम्। इत्यमरः।

**छन्दोलङ्कारादिकम्**- 'ज्ञेया वसन्ततिलका तभजा जगौ गः।' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। रूपकालङ्कारश्च।

**श्लोक ४०- मन्थानगः स भुजगप्रभु ----------------भ्रममातनोतु।।**

**सन्दर्भादिकम्**- महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्य एकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके स्वयम्बरसभायां समागतेषु राजसु कुशद्वीपाधिपतेः परिचयं तस्य देशस्य च रामणीयकं वर्णयन्ती भगवती सरस्वती दमयन्तीं वक्ति यत् यदा त्वमेनं पतिरूपेण वरिष्यसि तदा त्वं कुशद्वीपं गत्वा तत्र विद्यमानं मन्दराचलपर्वते अमृतमन्थनावसरे मन्थाय नेत्रतां गतस्य वासुकेः वेष्टनघृष्ट्या जातलेखे जलं प्रवहमानमवलोकयिष्यसि। तज्जलस्यशोभा तथैव भविष्यति यथा मन्दराचलपर्वते तस्मिन् वेष्टितः स्यात्।

**अन्वयः** -भुजगप्रभुवेष्टनघृष्टिलेखाचलद्धवलनिर्झरवारिधारः सः मन्थानगः त्वन्नेत्रयोः स्वभरयन्त्रितशीर्षशेषशेषाङ्ग.वेष्टिततनुभ्रमम् आतनोतु।

**व्याख्या**-भुजगानां = सर्पाणां प्रभोः = वासुकेः वेष्टैः = वेष्टनैः या घृष्टेः = घर्षणस्य लेखाः = रेखाः घर्षणजन्याः वलयाकाराःरेखाः इति भावः, तासु चलन्त्यः = प्रवहन्त्यः धवलाः = शुभ्राः, वारिधाराः = जलधाराः यस्याऽसौ तथाविधः। सः = प्रख्यातः मन्था = मन्थनदण्डः नगः = पर्वतः, मन्दराचल इत्यर्थः। त्वन्नेत्रयोः = तव चक्षुषोः स्वभरयन्त्रितशीर्षशेषशेषाङ्ग. वेष्टिततनुभ्रमम् = स्वस्य = मन्दराचलस्य भरेण = भारेण यन्त्रितानि = कुञ्चितानि, शीर्षाणि = मस्तकानि यस्याऽसौ तथाविधस्य तस्य शेषस्य = अनन्तस्य, पृथिव्याः भारं वहतः शेषाख्यस्याहेरिति भावः, शेषाङ्गे.न = अवशिष्टशरीरभागेन, वेष्टिता तनुः = शरीरं यस्याऽसौ तथाविधम् भ्रमम् = भ्रान्तिम् आतनोतु = जनयतु।

स्वभानैव सर्पः कामतोऽङ्गे. शेषाङ्गे.न वेष्टयति इति प्रसिद्धिः शेषस्यशुभ्राङ्ग. तया वारिधाराणाञ्चधवलत्वात् लेखासु वलयितत्वाच्च भ्रमः सम्भाव्यते इति भावः।

**समासः**- भुजगप्रभुवेष्टघृष्टिलेखाचलद्धवलनिर्झरवारिधारः- भुजगानाम् प्रभोः वेष्टैः, याः घृष्टिलेखाः, तासु चलन्त्यः धवलाः निर्झरवारिधारा यस्याऽसौ तथाविधः = भुजगप्रभुवेष्टघृष्टिलेखाचलद्धवलनिर्झरवारिधारः।

स्वभरयन्त्रितशीर्षशेषशेषाङ्गवेष्टिततनुभ्रमम्-स्वस्य भरेण यंत्रितानि शीर्षाणि यस्य तस्य शेषस्य, शेषाङ्गेन, वेष्टिता तनुः यस्य सः इति भ्रमम् = स्वभरयन्त्रि-तशीर्षशेषशेषाङ्ग.वेष्टिततनुभ्रमम्।

**कोशः** -मन्थाः -वैशाखमन्थमन्थान मन्थानोमन्थदण्डके। इत्यमरः।

**नगः** -शैलवृक्षौ नगावगौ। इत्यमरः। **भुजगः**- सर्पः पृदाकुर्भुजगोभुज-ङ्गोऽहिभुजङ्गमः। इत्यमरः।

**छन्दोलङ्कारादिकम्** -'ज्ञेया वसन्ततिलका तभजा जगौ गः।' इति लक्षणनुसारेणात्र वसन्ततिलकावृत्तम्। अत्र कविसम्मत सादृश्यमूलभ्रान्तिवर्णनात् भ्रान्तिमदलङ्कारः इति मल्लिनाथः।

**श्लोक ४१- द्रोणः स तत्र वितरिष्यति ----- कज्जलदर्शनीयः।।**

**सन्दर्भादिकम्**-महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्य एकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके दमयन्त्याः स्वयम्बरसभायामागतेषु राजसु शाल्मलद्वीपाधिपतेः परिचयोपस्थापनस्य प्रसङ्गे.न दमयन्तीमाह सरस्वती यत् शाल्मलद्वीपे त्वम् पति सौभाग्यं सर्वदा लप्स्यसे। तत्र नानाविधौषधिसम्पनो द्रोणाचलो विद्यते यत्र पर्वतशिखरे प्रकाशमानैरोषधिदीपैः मेघाः दीपजन्य कज्जलमिवाभान्ति। इति महत् सौन्दर्य तस्य पर्वतस्य। अतएवैनं शाल्मलद्वीपाधिपतिं त्वं पतिं कुरू इति भावः।

**अन्वयः**- तत्र औषधीनां दीप्तिभिः तद् द्वीपदीपः इव चूडामिलज्जलद-कज्जलदर्शनीयः सः द्रोणः गिरिः ते भाग्यलभ्यसौभाग्यकार्मण- मयीमुपदां वितरिष्यति।

**व्याख्या**- तत्र = शाल्मलिद्वीपे, ओषधीनाम् = तृणज्योतिषाम्, दीप्तिभिः = प्रकाशैः। तद्द्वीपदीपः = तस्य = शाल्मलिनामकस्य द्वीपस्य = अन्तरीपस्य दीपः इव = प्रदीप इव स्थितः इति शेषः अतएव चूडामिलज्जलदकज्जलदर्शनीयः = चूडायाम् = शिखरे, मिलद्भिः सङ्गच्छमानैः जलदैः = मेघैः एव कज्जलैः दर्शनीयः = अवलोकनीयः दर्शनप्रिय इति भावः, सः = प्रख्यातः द्रोणः = द्रोणाभिख्यो गिरिः = पर्वतः ते = तव दमयन्त्याः, भाग्यलभ्यसौभाग्यकार्मणमयीम् = भाग्येन = सुकृतादृष्टेनैवलभ्यं = तद्रूपाम्, उपदाम् = उपायनम् वितरिष्यति।

**समासः**- तद्द्वीपदीपः = तस्यद्वीपस्य दीपः = तद्द्वीपदीपः। चूडामिलज्जलदकज्जलदर्शनीयः -चूडायाम् मिलद्भिः जलदैरेव कज्जलैः दर्शनीयः

= चूडामिलज्जलदकज्जलदर्शनीयः। भाग्यलभ्यसौभाग्यकार्मणमयीम् = भाग्येनैव लभ्यं यत् सौभाग्यम् तस्य कार्मणमयीम् = भाग्यलभ्यसौभाग्यकार्मणमयीम्।

**कोशः** –कार्मणम् = 'मूलकर्म तु कार्मणम्' इत्यमरः। उपदा- उपायनमुपग्राह्यमुपहारस्तथोपदा। इत्यमरः। **औषधिः** ओषध्यः फलपक्वान्ताः। इत्यमरः। **द्वीपः** = द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिसारम्। इत्यमरः, दीपः = दीपः प्रदीपः इत्यमरः।

**छन्दोऽलङ्कारादिकम्** –'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्।

अत्र कार्मणमयीमुपदामिति परिणामालङ्कारः। आरोप्यमाणो यद् यस्यविषयकाणामाकारपरिणामेन प्रकृत प्रभुचित्तावर्जनोपयोगित्वात् आरोप्यमाणभारो विषयत्वेन स्थितम्। 'प्रकृतस्योपयोगित्वे परिणाम उदाहृत।' इति लक्षणात्। अस्य च द्वीप इवेत्युत्प्रेक्षया संसृष्टिः। तस्यास्तु जलदकज्जलेतिरूपकेण सङ्करः। इति जीवातुः।

**श्लोक ४२– विष्वग्वृतः परिजनैरयम् ---------- चामरचक्रचिह्नः।**

**सन्दर्भादिकम्**–महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्यैकादशात् सर्गात् परिगृहीतेऽस्मिञ्छ्लोके दमयन्त्याः स्वयम्बरसभायामागतानां राज्ञां वर्णनस्य प्रसङ्गंन सरस्वती जम्बूद्वीपस्य श्रैष्ठ्यम् प्रतिपादयन्ती दमयन्तीं वक्ति यत् जम्बूद्वीपो हि द्वीपानामधिपतिर्वर्त्तते अन्ये चान्तरीपा अस्य परिजनसमूहभूताः वर्त्तन्ते। सुमेरूपर्वत एवास्य सुवर्णदण्डमयं छत्रम् आस्ते।

**अन्वयः** –हे राजपुत्रि! अन्तरीपैः परिजनैः विष्वग्वृतः हेमाद्रिणा कनकदण्डमयातपत्रः कैलासरश्मिचयचामरचक्रचिह्नः अयं तेषाम् अधीश इव राजति।

**व्याख्या** –हे राजपुत्रि = राजकुमारि! अन्तरीपैः = अन्यैः द्वीपैः कुशक्रौञ्चशाल्मल्यादिभिः, पारिजनैः = परिचारकैः, विष्वग्वृतः = सर्वत आवृतः, हेमाद्रिणा = सुमेरूपर्वतेन, कनकदण्डमयातपत्रः = कनकस्य = सुवर्णस्य दण्डमयम् = दण्डेन युक्तम्, आतपत्रम् = छत्रम् यस्याऽसौ तथाविधः सुवर्णदण्डमयछत्रवान् कैलासरश्मिचयचामरचक्रचिह्नः = कैलासस्य कैलासनामकस्य हिमाच्छादितस्य पर्वतस्य, याः रश्मयः = ज्योतींषि, तेषां चयः = समूह एव चामरचक्रम् = चामरजालम्, तदेव चिह्नं यस्य सः, अयम् = एषः जम्बूद्वीपः, तेषाम् = स्वपरिजनतां गतानाम् कुशक्रौञ्चशाकशल्मल्यादिकानां द्वीपानाम्

अधीशः स्वामी इव = सदृशः राजति = शोभते।

अस्यजम्बूद्वीपस्य सुमेरगिरिः आतपत्रम्, कैलासपर्वतः = चामरचक्ररूपम् राजचिह्नम्। अतएवास्य जम्बूद्वीपस्य राजत्वं सिद्धयति राजचिन्हयुक्तत्वात्।

**समासः**-राजपुत्रि = राज्ञः पुत्री राजपुत्री तत्सम्बुद्धौ राजपुत्रि। कनकदण्डमयातपत्रः = कनकदण्डमयं आतपत्रं यस्याऽसौ तथाविधः = कनकदण्डमयातपत्रः। कैलासरश्मिचयचामरचक्रचिह्नः = कैलासस्य रश्मीनां यो हि चयः स एव चामरचकचिह्नम् यस्याऽसौ तथाविधः = कैलासरश्मिचयचामरचकचिह्नः।

**कोशः**- हेमाद्रिः = मेरुः सुमेरुः हेमाद्रिरत्नसानुः सुरालयः। इत्यमरः। अन्तरीपः = द्वीप अन्तरीपः इत्यमरः। रश्मिः = रश्मिःघृणिः प्रग्रह्योः। इति हैमः। चयः -प्राकारपीठयोः। समूहेऽप्यथ। इति हैमः।

**छन्दोऽलङ्कारादिकम्**- "ज्ञेया वसन्ततिलका तभजा जगौ गः" इतिलक्षणानुसारेणा वसन्ततिलकावृत्तम्। जम्बूद्वीपस्य अधीश इव राजतीत्युत्प्रेक्षालङ्कारः।

**श्लोक ४३- प्रत्यर्थियौवतवतंस --------------- दमयन्ति किं ते।**

**सन्दर्भादिकम्**-महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्य एकादशात् सर्गात् परिगृहीतेऽस्मिञ्छ्लोके स्वयम्बरसभायां समागतानां समेषां राज्ञां वर्णनमुपस्थापयन्ती भगवती सरस्वती अवन्त्याः अधिपतेः विषये अप्राक्षीत् यत् अस्य राज्ञो विषये तस्याः मनः अनुरक्तं वर्त्तते न वा? यतः सः राजा वीरः, शत्रूणां विजेता, शौर्यादिकानां समेषां सद्गुणानां सागरश्च वर्त्तते। अत एव तथाविधे तस्मिन् राजनि नारिजनानामनुरागः स्वाभाविक इवाभाति।

**अन्वयः** -दमयन्ति! प्रत्यर्थियौवतवतंसतमालमालोन्मीलत्तमः प्रकरतस्करशौर्यसूर्ये गुणसन्ततीनां विश्रान्तधामनि अस्मिन् अवन्तिनृपतौ किं ते मनः?

**व्याख्या**-हे दमयन्ति = है भैमि! प्रत्यर्थियौवतवतंसतमाल मालोन्मीलत्तमः = प्रत्यर्थिनाम् = शत्रुराज्ञाम् यत् यौवतम् = युवतीनां समूहः तस्य अवतंसाः = कर्णभूषणतां गताः, तमालमालाः तमालदलसमूहाः एव उन्मीलन्ति तमांसि = उद्गच्छदन्धकाराः, तेषां प्रकरस्य = समूहस्य तस्करम् = अपहारकम् शौर्यम् = शक्तिः एव सूर्यो यस्यासौ तस्मिन्, गुणसन्ततीनाम् = गुणाः शौर्य वीर्य पराक्रमादिकाः गुणा एव सन्ततयः तासां = गुणसन्ततीनाम् विश्रान्तिधामनि = विश्रान्तेः = विश्रामस्य, धाम = आश्रयो यः असौ तथाविधः तस्मिन्

अस्मिन् = एतस्मिन् समक्षमुपविष्टे, अवन्तिनृपतौ अवन्त्याः = उज्जयिन्याः, नृपतौ = राजनि, ते = तव दमयन्त्याः, मनः = अन्तःकरणम् किम् = कीदृशम् वर्त्तते। सानुरागं वा अनुरागरहितं वेति प्रश्नस्याभिप्रायः।

**समासः** –प्रत्यर्थियौवतवतंसतमालमालोन्मीलत्तमःप्रकरतस्करशौर्यसूर्ये = प्रत्यर्थिनाम् यत् यौवतम्, तस्य अवंतसाः याः तमालमालाः एव उन्मीलन्ति तमांसि तेषां प्रकरस्य तस्करम् शौर्यसूर्यो यस्याऽसौ तथाविधे = प्रत्यर्थियौवतवतंसतमालमालोन्मीलत्तमःप्रकरतस्करशौर्यसूर्ये। गुणसन्ततीनाम् = गुणा एव सन्ततयः तासां गुणसन्ततीनाम्। विश्रान्तधामनि = विश्रान्तेः धाम य असौ तस्मिन् विश्रान्तधामनि। अवन्तिनृपतौ = अवन्त्याः नृपति य असौ वस्मिन् अवन्तिनृपतौ।

**कोशः** –यौवतम् गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे, इत्यमरः। प्रकरः = प्रकरः कीर्णपुष्पादौ संहतौ। इति हैमः। तस्करः–चौरैकागरिकस्तेनदस्युतस्करमोषकाः। इत्यमरः।

**छन्दोलङ्कारादिकम्** – 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्।

अत्ररूपकोपमयोः सन्देहसङ्करः इति जीवातुः।

**श्लोक ४४– आगः शतं विदधतोऽपि –––––– तिथिकेतुरपैति लेखा।।**

**सन्दर्भादिकम्** –महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य एकादशात् सर्गात् गृहीते एतस्मिञ्छ्लोके, दमयन्त्याः स्वयम्बरसभायां समागतानां राज्ञां परिचयोपस्थापनायाः प्रसङ्गेन सरस्वती दमयन्तीं वक्ति यदयं राजा अवन्त्यधिपो वर्त्तते। तत्र भगवतो महाकालस्य शिरसि चन्द्रलेखा सदाविराजमाना भवति। यां दृष्टवा तत्रत्याः नार्यः सर्वदोदीप्तकामाः सत्यः सपत्नीभोगादिकमपि अस्य राज्ञो ज्ञात्वापि एनं कटुवचनं कदापि नाहि कथयन्ति। अपि तु ता एनं सर्वदा स्निह्यन्ति अत एव त्वमस्य राज्ञो वरणं पतिरूपेण कुरु।

**अन्वयः** –समद्धिकामाः वामाः आगःशतं विदधतः अपि अस्य परुषम् अक्षरं न अधीयते। तत्र अनध्याय हेतुतिथिकेतु हरमौलिशयालुः एकाचन्द्रीलेखा न अपैति।

**व्याख्या**–समिद्धकामाः = समिद्धः कामो यासां ताः = समिद्धकामाः = नित्यं प्रदीप्तस्मराः। वामाः = वक्रशीला अपि स्त्रियः प्रतीपदर्शिन्य इति

यावत्। आगःशतम् = आगसाम् = सपत्न्यादिभोगादिरूपाणामाप्यपराधानां शतम् = वहुप्रकारम्, विदधतः = कुवार्णस्यापि, अस्य = उज्जयिन्याधिपतेः, सम्बन्धे, परुषाक्षरम् = परुषाणि निष्ठुराणि अक्षराणि यस्याऽसौ तथाविधम् वाक्यम् = कटुवाक्यमिति यावत् नाधीयते = नहि पठन्ति नाहि वदन्तीति यावत्। तत्र = वामानामपि अनध्याय हेतुमाह तत्र उज्जयिन्याम्, अनध्यायहेतुतिथिकेतुः = अनध्यायस्य = अनध्ययनस्य हेतुः = कारणभूता या तिथिः = प्रतिपदभिधाना तस्याः केतुः = चिह्नस्वरूपा, प्रतिपत्पाठशीलस्व विद्येव तनुतां गता। इति हि सस्मार भगवान् वाल्मीकिः। हरमौलिशयालुः = हरस्य = भगवतः शङ्करस्य, मौलौ = मूर्धनि, शयालुः = स्थायुका, एका = एकाकिनी, प्रधानतमाच, चान्द्री = चन्द्र सम्बन्धिनी, लेखा = कला, न अपैति = नहि दूरी भवति। उज्जयिन्यां सर्वदा निवासरसिकस्य भगवतो महाकालाभिधानस्य शङ्करस्य शिरसि सर्वदा प्रतिपच्चन्द्रकला विराजते। तामवलोक्य नित्यं विवृद्धकामाः वक्रस्वभावा अपि अस्य आवन्त्यधिपतेः योषितः सर्वदा मृदुस्वभावाः भवन्ति। सागसमपि राजानमेनं ज्ञात्वैनं कटुवाक्यादिकं नहि कथयन्तीति भावः। अत एव त्वमेनं वृणु इति सरस्वत्या अभिप्रायः।

**समासः**- समिद्धकामाः = समिद्धः कामो यासां ताः समिद्धकामाः। आगःशतम् = आगसां शतं आगःशतम्। नाध्यायहेतुतिथिकेतुः। नाध्यायस्य हेतुभूता या तिथिः तस्याः केतुः = नाध्याय हेतु तिथिकेतुः हरमौलिशयालुः = हरस्यमौलिः हरमौलिः तत्र शयालुः = हरमौलिशयालुः।

**कोशः** -कामः = कन्दर्पोदर्पकोऽनङ्गः कामः पञ्चशरः स्मरः। इत्यमरः। वामा-वामा तु योषिति। इति हैमः। प्रतीपदर्शिनी वामा। इत्यमरः। **आगः** - आगःस्यादेनोवदधे मन्ता। इति हैमः। परुषम्-परुषं कर्बुरे (कठिने) रूक्षेस्यान्निष्ठुरवचस्यपि। इति हैमः।

**मौलिः**- मौलिः किरीटे धम्मिले चूडाकङ्कणोलिमूर्द्धसु।

**छन्दोलङ्कारादिकम्** - "ज्ञेया वसन्ततिलका तभजा जगौ गः" इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्।

**श्लोक ४५- पूजाविधौ मखभुजामुपयोगिनो ------------ गौरगर्भाः।**

**सन्दर्भादिकम्**-महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्यैकादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके स्वयम्बरसभायां दमयन्त्याः समागतानां सर्वेषां भूभुजां परिचयं प्रदानप्रसङ्गेन माथुरेशस्य पृथोः परिचयं कारयन्ती भगवती सरस्वती

दमयन्तीमाह-यदयं यो हि माथुरेश तव समक्षं विद्यते सः वदान्यः धार्मिकश्चातीव वर्त्तते। यज्ञसम्पादकेभ्यो ब्राह्मणेभ्यः तावन्मात्रायां प्रतिदिनं सुवर्णराशिं प्रयच्छति येन तेषां ब्रह्मणानां करतलस्य मध्यभागः पीतवर्णो भवति सुवर्णमुद्राभिः। अत एवैनं त्वं वृणु।

**अन्वयः** -मखभुजां पूजाविधौ उपयोगिनः कमलनिर्मलकान्तिभाजः ये विद्वत्कराः ते लक्ष्मीं दधता अनेन अनुदिनं वितीर्णैः हाटकैः स्फुटवराटकगौरगर्भाः।

**व्याख्या**-मुखभुजाम् = देवानाम्, पूजाविधौ = यज्ञकर्मणि समर्चासम्पादने, उपयोगिनः = प्रतिग्रहोपकारिणः, कमलनिर्मलकान्तिभाजः = कमलेन = जलेन, संकल्पजलेन इति भावः, निर्मलाः = स्वच्छाः या कान्तिः = आभाः तदभाजः = तद्विशिष्टाः अथवा कमलानाम् = पद्मानाम्, या निर्मला = स्वच्छा कान्तिः = तद्भाजः = तत्सदृशाः कमलकान्तिसमन्विताः, ये विद्वत्कराः = विदुषाम् = वेदज्ञानाम् तत्वज्ञानां वा कराः = हस्ताः = पाणयः ते पाणयः विद्वत्हस्ता इतिभावः, लक्ष्मीम् = श्रियं, दधता = धारयतां = श्रीमता इति भावः, अनेन = मथुराधिपतिना पृथुना, अनुदिनम् = प्रतिदिनम्, वितीर्णैः = प्रदत्तैः, हाटकैः = सुवर्णराशिभिः स्फुटवराटकगौरगर्भाः स्फुटाः = उज्ज्वलाः ये वराटकाः = कर्णिकाः तद्वत्गौराः = पीतवर्णा अरूणवर्णा वा गर्भाः = आभ्यन्तरो भागो येषां ते तादृशाः कृता इति शेषः। अस्य राज्ञो वदान्यता प्रख्याता वर्तते इति भावः। अतएवैनमेव त्वं स्वपतित्वेन वरणं कुरु।

**समासः**- पूजाविधौ = पूजाया विधिः पूजाविधिः तत्र = पूजाविधौ। कमलनिर्मलकान्तिभाजः = कमलानां याः निर्मलाः कान्तयः तद्भजन्ति ये ते = कमलनिर्मलकान्तिभाजः। विद्वत्कराः विदुषां कराः विद्वत्कराः। अनुदिनम् = दिनं दिनम् = अनुदिनम्। स्फुटवराटकगौरगर्भाः = स्फुटः यो हि वराटकः तद्वत् गौरः गर्भो येषां ते = स्फुटवराटकगौरगर्भाः।

**कोशः**- पूजा = पूजनमस्याऽपचितिः सपर्यार्हणाः समाः। इत्यमरः।

कमलम्-कमलं क्लोम्निभेषजे पङ्कजे सलिले ताम्रे। इति हैमः।

हटकम्-स्वर्ण सुवर्णम् कनकंहिरण्यं हेमहाटकम्। इत्यमरः। वराटकः -बीजकोशो वराटकः कर्णिका कणिकञ्च इति वैजयन्ती। गौरः -गौरो वर्णे सिते पीते। इति विश्वः।

**छन्दोलङ्कारादिकम्**- "ज्ञेया वसन्तातिलका तभजा जगौ गः इतिलक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। अत्र श्लेषालङ्कारः।

**श्लोक ४६- न पीपतां नाम चकोरजिह्वया ----------- भवन्मुखस्पशी।**

**सन्दर्भादिकम्**-अयं श्लोकः महाकविना श्रीहर्षेण कृतस्य नैषधीय चरितमहाकाव्यस्य द्वादशात् सर्गात् परिगृहीतो वर्तते। अस्मिञ्छ्लोके दमयन्त्याः स्वयम्बरसभायां समागातानां राज्ञां वर्णनस्य प्रसङ्गेन सरस्वती राज्ञः ऋतुपर्णस्य वर्णनं कुर्वन्ती वक्ति यत् अस्य ऋतुपर्णाभिख्यस्य राज्ञो मुख चन्द्रस्य चन्द्रिकायाः पानं चकोरजिह्वा करोतु नवा करोतु, किन्तु तव मुखस्पृशी चकोरस्य चक्षुषी तु तस्या आस्वादनं करोतु। कथं नहि क्रियते तया। त्वयाऽयं राजा ऋतुपूर्णः सस्नेहं कथं नहि विलोक्यते त्वमस्यैव राज्ञो वरणं पतिरूपेण करोतु इति सरस्वत्याः कथनस्याभिप्रायः।

**अन्वयः** -एतन्नखचन्द्रचन्द्रिका नाम चकोरजिह्वया न पीयताम्; किन्तु भवन्मुखस्पृशी चकोरस्य चक्षुषी इमां चिरं किं न आचामयसे?

**व्याख्या**-एतन्मुखचन्द्रचन्द्रिका-एतस्य = ऋतुपर्णस्य मुखमेव = वदनमेव चन्द्रः = चन्द्रमाः, तस्य चन्द्रिका = कौमुदी प्रसन्नतारूपाज्योत्स्नेति भावः, चकोरस्य जिह्वया = रसनया नाम = इति प्रसिद्धौ, कथञ्चित् = केनापि प्रकारेण, न = नहि, पीयताम् = पानं क्रियताम्। नामेति प्रसिद्धौ। अयमाशयो यत् चकोराः सत्यचन्द्रिकाया एव पानं कुर्वन्ति, अस्य मुखचन्द्रस्य चन्द्रिका तु अलीका अत एव पातुमशक्या तथापि भवन्मुखस्पृशी = भवत्याः = दमयन्त्याः मुखम् = वदनम् स्पृशतः ये ते तथाविधे = भवन्मुखस्पृशी = त्वन्मुखवर्तिनी, = आत्मना परिणते, चकोरस्य चक्षुषी = नेत्रे, इमाम् = राज्ञो ऋतुपर्णस्य मुखचन्द्रस्य चन्द्रिकाम्, चिरम् = सुदीर्घकालपर्यन्तम् किम् = कस्मात् कारणात्, न = नहि आचामयसे = पाययसे।

**समासः** -चकोरजिह्वया = चकोरस्य जिह्वा चकोरजिह्वा तया। एतन्मुखचन्द्रचन्द्रिका = एतस्य मुखमेव चन्द्रः तस्यः चन्द्रिका = एतन्मुखचन्द्रचन्द्रिका भवन्मुखस्पृशी = भवत्याः मुखम् स्पृशतो ये ते तथाविधे = भवन्मुखस्पृशी।

**कोशः**- चन्द्रिका-चन्द्रिका कौमुदी ज्योत्स्ना। इत्यमरः। चन्द्रः- हिमांशुश्चन्द्रमाश्चन्द्रः इन्दुः कुमुदवान्धवः। इत्यमरः।

**छन्दोलङ्कारादिकम्**- 'ज्ञेया वसन्ततिलका तभजा जगौ गः।' इति लक्षणनुसारेणात्र वसन्ततिलकावृत्तम्। अत्र भवन्मुखस्पृशोः चकोरचक्षुषोः विषयनिगरणेन भैमीचकोरचक्षुषोः अभेदप्रतीतेः भेदे अभेदलक्षणातिशयोक्तिरलङ्कारः। इति जीवातुः।

यन्नामवर्णावली मन्त्रः। प्रतिक्षितिभृताम् = क्षितिं विभर्तीति क्षितिभृत् प्रतीपाश्चेमे क्षितिभृतः तेषां प्रतिक्षितिभृताम्। दोस्स्तम्भकुम्भीनसान्- दोः स्तम्भाः एव कुम्भीनसाः तान् = दोः स्तम्भकुम्भीनसान् ।

**कोशः** –करीरः = वशांकुरेकरीरेऽस्त्री इति चामरः। सत्त्वम्- द्रव्येषुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु। इत्यमरः। कुम्भीनसः = कुम्भीनसः क्रूरसर्पे इति मेदिनी भास्वान्–भास्वद्विवस्वत् सप्ताश्वहारिदश्वोष्णरश्मयः। इत्यमरः। वीरः –शूरो वीरश्च विक्रान्तः।

**छन्दोलङ्कारादिकम्**– 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।' इति लक्षणानुसारेणात्र शार्दूलविक्रीडितम् वृत्तम्। वीररसांकुरूपात्रोत्प्रेक्षत्वादुत्प्रेक्षाङ्कारः।

**श्लोक ४९– तादृग्दीर्घविरिञ्चिवासर ----- पारं गिरां गाहते ।।**

**सन्दर्भादिकम्**–अयं श्लोकः महाकविना श्रीहर्षेण प्रणीतस्य नैषधीय चरितमहाकाव्यस्य द्वादशात् सर्गात् परिगृहीतो वर्त्तते। अत्र दमयन्त्याः स्वयम्बरंसभायां समुपविष्टानां समेषां क्षितिभृतां परिचयोपस्थापने व्यापृता भगवती सरस्वती राज्ञो ऋतुपर्णस्य प्रतापातिशयं वर्णयन्ती वक्ति यत्–यद ब्रह्मणो दिव्यवर्षसहस्रात्मकं दिनं भवति, समुद्रे यद्वाडवाग्नेर्निवासो भवति। तत्र ऋतुपर्णप्रतापस्य क्रमशः सूर्यरूपेण अग्निरूपेण परिणाम एव हेतुः। ऋतुपर्णप्रतापाग्निः समुद्रमध्ये वाडवाग्निरूपेण निवसति। प्रतिपक्षिक्षितिभृताम् यशस्ताराणामस्य प्रतापसूर्य एवाभिभवति।

**अन्वयः** –तादृग्दीर्घविरिञ्चिवासरविधौ–यत् कर्तृतां जानामि अम्बुधिपयः पूरोदरे यत्प्रतिबिम्बम् वाडव इति शङ्के । व्योम व्यापि विपक्षराजकयशः ताराः पराभावुकः अस्य प्रतापतपनः सः कासां गिरां पारं न गाहते ?

**व्याख्या**–तादृग्दीर्घस्य = चतुर्युग सहस्रन्तु ब्रह्मणो दिनमुच्यते, इत्युक्तमहापरिमाणस्य, विरिञ्चेः = लोकपितामहस्य ब्रह्मणः, वासरस्य = दिवसस्य, विधौ = विधाने, यत्कर्तृताम् = यस्य सूर्यस्य, नतु लोकेप्रख्यातस्य सूर्यस्य, लोकप्रख्यातसूर्यस्य मानवदिनकरणमात्रे सामार्थ्यावलोकनात् कर्तृता = कर्तृत्वम्, जानामि = अवगच्छामि, यस्य प्रतापरूपः सूर्यःकल्पान्तस्थायी विद्यते इति भावः। अम्बुधिपयः पूरोदरे = अम्बुधेः = सागरस्य, यद्धि पयः = जलम्, तस्य पूरस्य = समूहस्य उदरे =अन्तः, यत्प्रतिबिम्बम् = यस्य = ऋतुपर्णस्य प्रतापरूपस्य अग्नेः प्रतिबिम्बम् = प्रतिच्छायम् बाडवः = बाड्वाग्नि रूपेण वर्त्तते इति शङ्के। लोक प्रख्यातस्याग्नेस्तु जलेन शमनमवलोकनात् नहि ऽग्नि बाडवाग्निः भवितुमर्हति। व्योमव्यापिविपक्षराजकयशस्ताराः = व्योमव्यापिन्यः

= आकाशव्यापिन्यः विपक्षस्य = विरोधिनः राजकस्य = राजगणस्य यशांस्येव = कीर्तय एव ताराः = तारागणः तस्य पराभावुकः = स्वमहसांतिरोधानकर्ता 'लषपत् --- इत्यादिना उकञ्प्रत्यय': 'नलोकाः' इत्यादिना षष्ठीनिषेधे सति तारा इति कर्मणि द्वितीया सः प्रख्यात ऋतुपर्णसंबन्धी प्रतापतपनः = प्रतापसूर्यः, कासां गिराम् = वचसाम् पारम् = पारंगमं न = नहि गाहते, सर्वासामेव गाहते इति भावः। सः कासामपि गिरां विषयो नहि भवतीति भावः।

**समासः** -तादृग्दीर्घविरिञ्चिवासरविधौ = तादृशस्य दीर्घस्य विरिञ्चेःवासरस्य विधौ = तादृग्दीर्घविरिञ्चिवासरविधौ। यत्कर्तृताम् यस्य कर्तृताम् = यत्कर्तृताम् यत्प्रतिबिम्बम् = यस्य प्रतिविम्बम्। अम्बुधिपयःपूरोदरे = अम्बुधेःपयसः पूरस्य उदरे। व्योमव्यापिविपक्ष राजकयशस्ताराः -व्योमव्यापिनो यानि विपक्षस्य राजकस्ययशांसि तानि एव ताराः = व्योमव्यापिविपक्षराजकयशस्ताराः। प्रतापतपनः = प्रताप एव तपनः = प्रतापतपनः।

**कोशः- विरिञ्चिः** धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः, इत्यमरः। **वासर :** -घस्रोदिनाहनीवा तु क्लीबे दिवसवासरौ, इत्यमरः। **पूरः** -पूरःस्यादम्भसां वृद्धौ व्रणसंशुद्धिखाद्ययोः। इति हैमः।

**छन्दोऽलङ्कारादिकम्** -"सूयाश्वैर्मसजस्तताः सगुरवः शर्दूलविक्रीडितम्" इति लक्षणानुसारेणात्र शार्दूलविक्रीडितं वृत्तम् 'अत्रोत्प्रेक्षालङ्कारद्वयम्' इति जीवातुः।

**श्लोक ५०- द्वेष्याकीर्ति कलीन्दशैलसुतया-----------कीडादराडम्बरः।**

**सन्दर्भादिकम्**-महाकविना श्रीहर्षेण प्रणीतस्य नौषधीयचरितमहाकाव्यस्य द्वादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके दमयन्त्याः स्वयम्बरसभायां समागतानां समेषां दमयन्तीलिप्सूनां राज्ञां वर्णनप्रसङ्गेन भगवती सरस्वती ऋतुपर्णस्य वर्णनं वक्ति यदयं राजा पराक्रमी वर्त्तते। अस्य यशः एव धवलवर्णा गङ्गा विद्यते, द्वेष्याणाम् अकीर्त्तय एव नीलवर्णा यमुना स्वरूपाः सन्ति। उभयोः सङ्गमस्थलं रणक्षेत्रमेव प्रयागो वर्त्तते। येन प्रकारेण प्रयागे सङ्गमस्थले स्नात्वा जनाः स्वर्गाधिकारिणो भवन्ति तेनैव प्रकारेण रणक्षेत्रे राज्ञानेन मारिताः वीराः स्वर्गं गत्वा रम्भादिकाभिरप्सरोभिः साकं नन्दनवने प्रविश्यानन्दानुभवं कुर्वन्तीति भावः।

**अन्वयः** -यत् अस्य दोर्द्वयीकीतिश्रेणिमयी गङ्गा रणप्राङ्गणे द्वेष्या कीर्तिः

कलीन्दशैलसुतया नद्या समागममगात् तत् तस्मिन् विनिमज्य बाहुजभटैः रम्भापरीरम्भा नन्दनिकेतनन्दनवनक्रीडादराडम्बरः आरम्भि।

**व्याख्याः-** यत् = यस्मात् कारणात् अस्य = एतस्य ऋतुपूर्णाभिख्यस्य राज्ञः दोर्द्वयीकीर्तिश्रेणिमयी, दोः = बाह्वोः द्वयी = युग्मम् तस्याः कीर्तिः = यशः वीरत्वप्रकाशन स्वरूपा तासां श्रेणिमयी = समूहस्वरूपा गङ्गाजाहनवीरणप्राङ्गणे = रणस्य = युद्धस्य प्राङ्गणे भूमौ। द्वेष्याकीर्तिकलिन्दशैलसुतया = द्वेष्याणां = विपक्षिणां राज्ञां या अकीर्तयः = अपयशांसि ता एव कलीन्दशैलसुता = कलीन्दगिरिनन्दिनी, यमुनेति यावत् तया नद्या = स्रोतस्विन्या समागमम् = सङ्गमम्, अगात् = प्राप्तम्। अत्र यशसः श्वेतरूपत्वात् गङ्गात्वेन कृष्णवर्णायाः यमुनायाः रूपेण अकीर्तेः रूपणम्। यशसां श्वेतरूपत्वस्य कविसमयख्यातिः। तत् = तस्मात् तस्मिन् = तस्मिन् रणप्राङ्गणरूपे प्रयागक्षेत्रे, विनिमज्ज्य मृतिमवाप्य, स्नात्वा च बाहुजभटैः = बाहुजाः = क्षत्रियाः त एव भटाः = वीराः, क्षत्रियाणां बाहुजत्वम् 'बाहुराजन्यः कृतः' इति श्रवयति श्रुतिः। तैः ऋतुपर्णस्य प्रतिपक्षिभूतैरिति यावत्, रम्भापरिरम्भानन्दनिकेतनन्दनवनक्रीडादराम्बरः = रम्भायाः रम्भानाम्न्याः स्वर्वेश्यायाः यो हि परीरम्भः = निभृतालिङ्गनम्, तज्जन्यस्य आनन्दस्य = सुखस्य यो हि निकेतः = स्थानाम् तस्मिन् नन्दनवने = इन्द्रोद्याने क्रीडादराडम्बरः = विहारेच्छाविजृम्भणम्, 'परिब्राड् योगयुक्तश्च च रणे चाभिमुखे हतः। द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ, इत्युक्तमपि आरम्भि = आरब्धः। श्रुतिरपि प्रयागस्य स्वर्गलोकप्रदत्वमाह-सितासितै सरिते यत्र सङ्गते तत्रप्लुतास्ते दिवमुत्पतन्ति। ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते। इति।

**समासः-** द्वेष्याकीर्तिकलीन्दशैलसुतया = द्वेष्याणाम् अकीर्त्तयः एव कलीन्दशैलसुता तया = द्वेष्याकीर्तिकलीन्दशैलसुतया। दोर्द्वयीकीर्तिश्रेणिमयी = दोर्द्वय्याः कीर्तिदोर्द्वयीकीर्तिः तासां श्रेणिमयी = दोर्द्वयीकीर्तिश्रेणिमयी। रणप्राङ्गणे = रणमेव प्राङ्गणं तस्मिन् = रणप्राङ्गणे। बाहुजभटैः = बाहुजा एव भटाः तैः = बाहुजभटैः। रम्भापरीरम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः = रम्भायाः परीरम्भः रम्भापरीरम्भः तज्जन्य आनन्दः तस्य निकेते नन्दनवने क्रीडायाम् आदरस्य आडम्बरः रम्भापरीरम्भानन्द निकेतनन्दनवनक्रीडादराडम्बरः।

**कोशः** बाहुजः -बाहुजः क्षत्रियो विराट्, इत्यमरः। कीर्तिः -कीर्त्तिः

समज्ञा च इत्यमरः। रणः अस्त्रियाम् समरानीकरणाः कलहविग्रहौ। इत्यमरः।

**छन्दोऽलङ्कारादिकम्**– 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।' इति लक्षणानुसारेणात्र शार्दूलविक्रीडितं वृत्तम्।

अत्रकीर्त्यकीर्त्योः गङ्गायमुनारोपाद्रूपकालङ्क.ारः। इति जीवातुः।

**श्लोक ५१– नम्रप्रत्यर्थिपृथ्वीपतिमुख------------सांयुगीनं विभर्त्ति।।**

**सन्दर्भादिकम्**– महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्य द्वादशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके दमयन्त्याः स्वयम्बरसभायां समागतानां समेषां राज्ञां परिचयोपस्थापनस्य प्रसङ्गे.न सरस्वती मलयाधिपतेः पराक्रमातिशयं वर्णयन्ती वक्ति यत् अयं राजा वैशिष्ट्यद्वयेन विशिष्टो वर्त्तते।

१– पराजिताः राजानः नम्रीभूया यदास्य पादपद्मेषु शिरोभिः प्रणामं कुर्वन्ति तदा तेषां मुखकमलमालिन्यं अस्य चरणनखकान्तिचन्द्रवदाचरणं करोति अस्य चरणनखकान्तयोधवलाः सन्ति तत्र तेषां मुखमलिनम् छायावदाभात्। चन्द्रेऽपि मालिन्यमवलोक्यत एव।

२– दृप्तानां शत्रूणां समराङ्ग.णे प्राणवायुरूपममृतं पित्वा अस्य बाहू पीनसर्पवदाभातःश्च।

**अन्वयः** –हे ऐणेयनेत्रे एषः भूलोकस्य भर्ता नम्रप्रत्यर्थिपृथ्वीपति मुखकमलम्लानताभृङ्ग.जातच्छायान्तः पानचन्द्रायितचरणनखश्रेणिः, किञ्च दृप्तारिप्राणवातामृतरसलहरी भूरिपानेन पीनम् सांयुगीनं भुजभुजगयुगं विभर्ति।

**व्याख्या**–हे ऐणेयनेत्रे = एण्या इमे ऐणेये ते च ते नेत्रे च मृगशावाक्षि इति यावत्। उपमानपूर्वपदबहुब्रीहावुत्तपदलोपः। नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गपातच्छायान्तःपानचन्द्रायितचरणनखश्रेणिः = नम्राणाम् = चरणकमलयोः अवनतानाम्, प्रत्यर्थिपृथ्वीपतीनाम् = शत्रूणां राज्ञाम् पराजितानां भूपतीनामित्यर्थः मुखनि = वदनानि एव कमलानि तेषां या म्लानता = मनीलता अपमानजनितं वैवर्ण्यमितिभावः, सैव भृङ्गजातस्य = भ्रमरसमूहस्य, छाया = नीलाभाः तस्य अन्तःपातेन = अन्तर्गतत्वेन, स्वच्छनखे प्रतिविम्बितत्वातचन्द्रायिता = चन्द्रावदाचरिता। मलिनामुखच्छायारूपकलङ्क सम्पत्तेरितिभावः चरणनखश्रेणिः यस्य तादृशः, एषः = अयं पृथिव्याः = वसुन्धरायाः भर्ता = स्वामी, दृप्तारिप्राणामृतरसलहरी भूरिपानेन = दृप्ताः गर्विताः ये अरयः शत्रवः, तेषां प्राणवायव एव अमृतरसस्य = पीयूषरसस्यलहर्यः = वीचयः तासां भूरिणा = भूयसा, पानेन = पानकरणेन

पीनम् = मांसलमत एव सांयुगीनम् = समराङ्गणेऽपराजेयम् भुजभुजगयुगम् = हस्तरूपं सर्पद्वयम् विंभर्ति। यथा वायुपानेन सर्पाः स्थूला जायन्ते तथाऽस्य राज्ञो हस्तौ शत्रूणां प्राणवायुपानेन स्थूलौ संजातविति भावः।

**समासः** - नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गजातच्छायान्तःपातचन्द्रायितचरणनखश्रेणिः = नम्राणां प्रत्यर्थिनाम्, पृथ्वीपतीनां मुखानि कमलानि तेषां म्लानता सैव भृङ्ग.जातस्य छाया तस्याः अन्तः पातेन चन्द्रायिता चरणनखश्रेणिः यस्याऽसौ तथाविधः नम्र प्रत्यर्थिपृथ्वीपतिमुखकमल-म्लानताभृङ्गजातच्छायान्तःपातचन्द्रायितचरणनखश्रेणिः दृप्तारिप्राणवातामृत-लहरीभूरिपानेन = दृप्तानामरीणाम् प्राणवाता एव अमृतरसाः तेषां याः लहर्यः तासां भूरिणा पानेन = दृप्तारिप्राणवातामृतरस लहरी भूरिपानेन। भुजभुजगयुगम् = भुजा एव भुजगाः तेषां युगम् = भुजभुजयगयुगम्।

**कोशः** -ऐणेय = ऐणेयमेण्याश्चर्माद्यमेणस्यैषामुभेत्रिषु। इत्यमरः।

**छन्दोलङ्क.रादिकम्ः** "सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्।" इतिलक्षणानुसारेण शार्दूलविक्रीडितं वृत्तम्। रूपकालङ्कारश्च।

**श्लोक ५२- अध्याहारः स्मरहरशिरश्चन्द्र----------------कीर्त्तिपूरः।**

**सन्दर्भादिकम्-** अयं श्लोको महाकविना श्रीहर्षेण प्रणीतस्य नैषधीय चरितमहाकाव्यस्य द्वादशात् सर्गात् परिगृहीतो वर्त्तते। दमयन्त्याः स्वयम्बरसभायां समागतानां राज्ञां परिचयोपस्थापनप्रसङ्गे.न मलयाधिपं परिचाययन्ती भगवती सरस्वती दमयन्तीं वक्ति यत् अस्य राज्ञो यशः त्रैलोक्ये व्याप्तं वर्त्तते यतः अस्य राज्ञो यशः भगवतःशङ्करस्य शिरोभूषारूपस्य चन्द्रमसः षोडशीकलारूपं वर्त्तते अतएवास्य प्रसरः स्वर्गलोके प्रसिद्धः, सहस्रफणाव्रतवन अनन्तस्यैक शरीरयष्टित्वात् तस्य सहस्र शरीरयष्टियोग्यतामर्हतीति पाताललोकेऽपि तस्य यशसः व्याप्तिः प्रसिद्धा एक एव क्षीरसंभव समुद्रपयिना मुनिनाऽगस्त्येन विभेति अतएवास्य कीर्तिं सकालमेव वीरं शरमयं कृत्वा सहस्रसंख्याकं क्षीरसागरं कृत्वा तस्य भयमपाकरोति इति भूलोकेऽपि तस्य यशसो व्याप्तिरिति त्रैलोक्यव्यापकं वर्त्तते राज्ञो मालयाधिपस्य यशः।

**अन्वयः** -स्मरहरशिरश्चन्द्रशेषस्य अध्याहारः शेषस्य. अहेः भूयः फणसमुचितः काययष्टिनिकायः, दुग्धाम्भोधेः मुनिचुलुकनत्रास नाशाभ्युपायः कायव्यूहः अदः कीर्तिपूरः

**व्याख्याः** -स्मरहरशिरश्चन्द्रशेषस्य = स्मरम् = कामम्, हरति =

विनाशयति इति स्मरहरः = शङ्करः तस्य शिरसि = मूर्धनि चन्द्रशेषस्य कलामात्रावशिष्टचन्द्रस्य, अध्याहारः = शेषपूरकः पञ्चदशकलाः भवन्ति चन्द्रमसः तिथीनां पञ्दशसंख्यावत्वात्। अस्यैव कीर्त्या चन्द्रमसः षोडशकलात्वं पूर्यते इति भावः। अत एवास्य की र्त्तेः स्वर्गलोकव्यापाकत्वं सिद्ध्यति। शेषस्य = अनन्ताभिख्यस्य, अहेः = सर्पस्य भूयः कलासमुचितः = भूयः = सहस्रसंख्याकानां फणानाम् = शिरसां भोगानामिति वा, समुचितः = योग्यः काययष्टीनिकायः = काययष्टीनाम् सहस्रसंख्याकानां शरीराणाम्, निकायः = समूहभूतः फणसमसंख्याकैः शरीरैर्भाव्यमिति धिया अवशिष्टशरीरसम्पादकः इति अस्या कीर्त्तेः भोगिलोके व्याप्तिः सिद्धयति। दुग्धाम्भोधेः = दुग्धस्य = क्षीरस्य, अम्भोधेः = समुद्रस्य, मुनि चुलुकनत्रासनाशाभ्युपायः मुनेः = अगस्त्यस्य, यद्धि = चुलुकनम् = आचमनंतेन द्वारा पानम् मुनिरगस्त्यः क्रुद्धस्सन् समग्रं समुद्रमेव पपौ आचमनत्रयेण इति हि प्रसिद्धिः। तज्जन्यः यो हि त्रासः = भयम्, तस्य नाशस्य = विनाशस्य अभ्युपायः = समुचितोपायस्वरूपः कायव्यूहः = कायसंघातः। क्षीराब्धेः प्रतिनिधिरित्यर्थः। पूर्वं क्षीराब्धेः चुलुकग्रहणेन भयमासीत्। इदानीमेतत्कीर्तिपूरस्य पृथ्वीव्यापित्वात् तच्छौक्ल्येन सर्वजलानां शौक्ल्यत्वात् दुग्धवत् प्रतीतेः इदं क्षीराब्धेर्वारिः अन्यद् वा वारि इति निश्चेतुमशक्यत्वेन नास्ति अगस्त्यगण्डूषात् तादृशं भयमिति भावः, अदः कीर्तिपूराः अमूष्य यशोराशिः क्व = कुत्र, जगार्त्ति = नाहि जागर्ति। त्रौलोक्य एव जागर्त्ति इति भावः।

**समासः** –स्मरहरशिरश्चन्द्रशेषस्य = स्मरं हरतीति स्मरहरः तस्य शिरसः यो हि चन्द्रशेषः तस्य = स्मरहरशिरश्चन्द्रशेषस्य। भूयःफणसमुचितः = भूयसां फणानां समुचितः = भूयः फणसमुचितः। काययष्टीनिकायः = काया एव यष्टयः काययष्टयः तासां निकायः = काययष्टीनिकायः। दुग्धाम्भोधेः = दुग्धस्य अम्भोधेः = दुग्धाम्भोधेः। मुनिचुलुकनत्रासनाशाभ्युपायः = मुनेः चुलुकनात् त्रासस्य नाशे अभ्युपायः = मुनिचुलुकनत्रासनाशाभ्युपायः। कीर्तिपूरः = कीर्तेःपूरः = कीर्तिपूरः।

**कोशः**– स्मरहरः–हरःस्मरहरः भर्गस्त्र्यम्बकस्त्रिपुरान्तकः इत्यमरः।

चन्द्रः –हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः। इत्यमरः। शेषः –शेषोऽनन्ते वधे सीरिण्युपयुक्तेतरेऽपिच। इति हैमः अहिः = सर्पेवृतेच। इति हैमः।

**छन्दोलङ्कारादिकम्**– "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।" इति लक्षणानुसारेणात्र शार्दूलविक्रीडितम् वृत्तम्।

अत्र कीर्त्तिपूरस्य त्रैलोक्यव्यापित्वासम्बन्धेऽपि तत्सम्बन्धोक्तेः तद्रूपतिशयोक्तिः, सा च चन्द्रशेषाध्याहारत्वादिरूपकोत्थपितेति सङ्कर इति जीवातुः।

**श्लोक ५३– अस्यारिप्रकरः शरश्च------------ चामुत्रभित्यद्भुतम्।**

**सन्दर्भादिकम्**–अयं श्लोकः महाकविना श्रीहर्षेण कृतस्य नैषधीयचरितमहाकाव्यस्य द्वादशसर्गात् परिगृहीतो वर्त्तते। दमयन्त्याः स्वयम्बर-सभायां समागतानां समेषां राज्ञां परिचयोपस्थापनप्रसङ्गे.न भगवती सरस्वती मगध नरेशस्य वीरताया उत्कर्षं वर्णयन्ती वक्ति यत् यदा दृढ़मुष्ट्याऽयं राजा समराङ्गणे शत्रुषु बाण प्रहारं करोति तदा तस्य नतु तस्य बाणाःकम्पिता भवन्ति नवा शत्रवः शीत्कारस्यावसरं लभन्ते। बाणपात समकालमेव ते शरीरं परित्यज्य स्वर्गलोकं यान्ति अतएवास्य राज्ञो महान् पराक्रमो वर्त्तत।

**अन्वयः** –अस्य नृपतेः अरिप्रकरः शरश्च उभौ संख्ये सम्मुखौ पतन्तौ सीत्कारञ्च न रचयतः कम्पञ्च न प्राप्नुतः मुक्तयोः उभयोः यत् पुनः निवृत्तिः न जागर्ति तद्युक्तम्। तत्र एकः मित्रम् भिन्नत्ति अपरश्च अमित्रम् इत्यद्भुतम्।

**व्याख्या**–अस्य = मगधेश्वरस्य नृपतेः = राज्ञः अरिप्रकरः = अरीणाम् = शत्रूणाम् प्रकरः = समूहः, शरश्च = बाणश्च, संख्ये = संग्रामस्थले, सम्मुखौ = युगपत् एतदभिमुख पराभिमुखञ्च उभौ शरारिप्रकरौ, पतन्तौ सन्तौ = सीत्कारञ्च = कष्टाभिव्यञ्जकं दन्तमध्यान्निर्गतं शब्दविशेषं पक्षे वायु जन्यं शब्दविशेषञ्च, यत् न = नहि, रचयतः = कुरूतः, यत् कम्पञ्च = वेपनञ्च प्राप्नुतः = लभेते। अयमाशयो यत् दृढमुष्टिना कृते सति बाणप्रहारे नतु शब्दो भवति न वा कम्पो भवति अतएवायं राजा दृढिमुष्टिनैव बाणप्रहारं करोतीति भावः। राज्ञः बाणस्य प्राहारसमकालमेव शत्रवः प्राणान् त्यजन्तीति दुःखानुभवस्य कम्पस्य चावसरमेव ते नहि लभन्ते। यत् पुनः = किञ्च मुक्तयोः = संसारात् कार्मुकाच्च। संगरेमृताः शत्रवः संसारान्मुक्ताः भवन्ति, किञ्च चापात् मुक्ताः बाणाःशत्रूणां प्राणनाशं कुर्वन्ति। इत्थमुभयोः = अरिप्रकरबाणयोः यत् निवृत्तिः = संसारे पुनर्जन्म बाणानाञ्च परावर्तनं न = नहि भवति तद्युक्तमेव = उचितमेव। एकेनैव बाणेन शत्रवो म्रियन्ते इति भावः। तत्र अरिप्रकरशरयोः एकः मित्रम् = सूर्यं भिन्नति = भेदनं कुर्वन्ति। तथा च शास्त्रम्, द्वाविमौ पुरूषौ लोके सूर्यमण्डल भेदिनौ। परिव्राड् योगयुक्तश्च रणेचाभिमुखे हतः

इति। च = किञ्च अपरः = शरः, अमित्रम् = शत्रुसमूहम् इति = इत्येतत्, अद्भुतम् = आश्चर्यजनकमेव।

अत्रअमित्रं भिन्नतीत्युक्त्या मित्रं नभिन्नतीति इति च प्रतीयते। असूर्यं पश्येतिवत् नञः प्रसज्यप्रतिषेधकार्थत्वात्। इत्थञ्च तुल्यकर्मणोस्तयोः मित्रभेदमित्रभेदाभावरूपविरुद्धकर्मकारित्वाद् अद्भुतम्।

**समासः-** अरिप्रकरः = अरीणां प्रकरः = अरिप्रकरः।

**कोशः-** मित्रः -मित्रं तु सख्यौ मित्रो दिवाकरे। इति हैमः। प्रकरः -प्रकरः कीर्णपुष्पादौ संहतौ। इति हैमः।

**छन्दोलङ्कारादिकम्-** 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।' इति लक्षणानुसारेणास्मिन् श्लोके शार्दूलविक्रीडितम् वृत्तम्। मित्रपदेन सूर्यमण्डलभेदनस्य वीरपुरूषायतत्वेन सम्भवात् अमित्रपदेन च शत्रून् भिनत्तीत्यनिरोधात् विरोधाभासोऽलङ्कारः इति जीवातुः।

**श्लोक ५४- शुभ्रांशुहारगणहारिपयोधराङ्क---- बहुलाभरणार्चितानि।।**

**सन्दर्भादिकम्-** महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य त्रयोदशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके दमयन्त्याः स्वयम्बरसभायां समागतानां सर्वेषां राज्ञां परिचयमुपस्थापयन्ती सरस्वती अनेन श्लोकेन नलरूपधरस्येन्द्रस्य तादृशैः विशेषणैः वर्णनं करोति यानि विशेषणानि इन्द्रनलयोः उभयोरेव समानरूपेणान्वितानि भवन्ति।

अत्र वक्ति सरस्वती यदयं देवेन्द्रःदेवसेनाभिः समराङ्गणे समितौ चानुगम्यते। नलोऽपि अनेकालङ्कारालङ्कृतः सन् चामरवाहिनीभिरूपास्यते इति भाव।

**अन्वयः** -एषः च शुभ्रांशुहारगणहारिपयोधराङ्कचुम्बीन्द्रचापखचित द्युमणिप्रभाभिः बहुलाभरणार्चिताभिः च अमरवाहिनीभिः यात्रासु च समिति च अन्वास्यते।

**व्याख्या-** अयं श्लोको द्व्यर्थको वर्त्तते। एकोऽर्थ इन्द्रपक्षे भवति अपरश्च नलपक्षे। तत्रेन्द्रपक्षे = एषः = अयम् वीरः शुभ्रांशुहारगणहारिपयोधराङ्कचुम्बीन्द्रचापखचितद्युमणिप्रभाभिः = शुभ्रांशुः = चन्द्रः हरस्येमे हाराः = प्रमथगणः हारस्यापत्यं पुमान् हारिः = स्कन्दः पयोधराङ्कचुम्बिना = मेघोत्सङ्गसङ्गिना इन्द्रचापेन = इन्द्रधनुषा, खचिताः = मिश्रिताः, द्युमणेः = सूर्यस्य प्रभाः = कान्तयः, यत्र तादृशीभिः बहुलाभरणार्चिताभिः = बहुः = अनेकः लाभः = त्रिलोकविजयादिभिः, यस्मिन् तथाविधे रणे = युद्धे, अर्चिताभिः = पूजिताभिः, अमरवाहिनीभिः देवेसेनाभिः, समिति = रणे च युद्धक्षेत्रे चेत्यर्थः; यात्रासु =

रणयात्रासु च, अन्वास्यते, अनुगम्यते।

नलपक्षे तु = एषः = अयम् राजा नलः, शुभ्रांशुभिः शुभ्राः धवला अंशवा यस्याऽसौ तथाविधः ताभिः। हारगणैः = मुक्ताकलापसमूहैः, हारिपयोधराङ्क चुम्बिभिः = मनोज्ञस्तनशोभासङ्गिभिः इन्द्रचापैः = इन्द्रधनुषसदृशविविधवर्णविशिष्टभूषणदीप्तिभिः, खचिताः = मिश्रिताः द्युमणेः = सूर्यस्य सूर्यकान्तमणेरिति यावत् प्रभाः = कान्तयो यासां तादृशीभिः बहुलैः = आभरणैः, अर्चिताभिः = भूषिताभिः, चामरवाहिनीभिः = चामरधारिणीभिः समितौ = सभायां, यात्रासु देवतामहोत्वेषु च अन्वास्यते अनुगम्यते।

**समासः**–शुभ्रांशुहारगणहारिपयोधराङ्कचुम्बीन्द्रचापखचितद्युमणिप्रभाभिः = शुभ्रांशुः, हारगणहारिणः हरसंबन्धिनो हाराः तेषां गणाः तान् सर्वान् हरन्तीतिशुभ्रांशुहारगणहारिणः ये पयोधराः। अथवा हरस्यापत्यं हारिः स्कन्दः, गणेशोमेघ श्च तेषामङ्कचुम्बी यः इन्द्रः तस्य चापम् तेन खचितः। द्युमणेः प्रभाः यासु तथाविधाभिः बहुलाभरणार्चिताभिः = बहवो लाभाः यस्मिन्नसौ तथाविधे रणे अर्चिताभिः = बहुलाभरणार्चिताभिः। अमरवाहिनीभिः = अमराणां वाहिन्यः ताभिः। नलपक्ष –शुभ्रांशुहारगणहारिपयोधराङ्कचुम्बीन्द्रचापखचितद्युमणिप्रभाभिः –शुभ्राः अंशवो यस्य तेन हारगणेन कृत्वाहारी पयोधराङ्कः तच्चुम्बिनी इन्द्रचाप सम्बद्ध द्युमणेः प्रभव प्रभा यासां ताभिः = शुभांशुहारगणहारिपयोधराङ्कचुम्बीन्द्रचाप खचितद्युमणिप्रभाभिः, बहुलाभरणार्चिताभिः –बहुलानि यानि आभरणानि तैः अर्चिताभिः = बहुलाभरणार्चिताभिः।

**कोशः** –शुभ्रः = शुभ्र उद्दीप्तशुक्लयोः इत्यमरः। समित् = समिद् युद्धः इत्यमरः।

**छन्दोलङ्कारादिकम्**–'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र' वसन्ततिलकावृत्तम्। अत्रश्लेषालङ्कारश्च।

**श्लोक ५५- भूमीभृतः समिति जिष्णुम् -------- मद्भुतमेतदीयम्।।**

**सन्दर्भादिकम्**–अयं श्लोकः महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य त्रयोदशादङ्कात् परिगृहीतो वर्त्तते। दमयन्त्याः स्वयम्बरसभायां समागतानां समेषां राज्ञां वर्णनं कुर्वन्ती भगवती सरस्वती नलरूपधरस्येन्द्रस्य वर्णनस्य प्रसङ्गेन तथाविधैः विशेषणैः वर्णनं करोति यानि विशेषणानि इन्द्रपक्षे नलपक्षे च समानरूपेणान्वितानि भवन्ति।

**अन्वयः** –हे घटप्रतिभटस्तनि भूमिभृतः समितिजिष्णुम् अपव्यपायं अमुं

कथञ्चित् अपि अमघवन्तं नतु जानीहि, गुप्तं अतिशयम् एतदीयं बाहुनेत्रं नालोकसे।

**व्याख्या** –हे घटप्रतिभटस्तनि –घटस्य = कुम्भस्य प्रतिभटौ प्रतिस्पर्द्धिनौ, स्तनौ = पयोधरौ यस्यास्तथाभूते = घटसदृश विशालस्तनवति! समिति = संयुगे भुवः विभ्रति ये ते तान् भूभृतः = पर्वतान्, जिष्णुम् = जयशीलम्। अत्र न लोका इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया अपव्यपायम् = अविद्यमानं पवेरपायं यस्याऽसौ तम् = सर्वदावज्रधरिणम् अमुम् = वीरम् कथञ्चित् अपि = केनापि प्रकारेण, अमघवन्तम् मघवत अन्यम् = इन्द्राद्व्यतिरिक्तमिति भावः नतु जानीहि = नैवविद्धि। अमुमिन्द्रमेवावेहीति भावः।

अथ स्यादयमिन्द्रश्चेदस्य नेत्रसहस्रं नावलोक्यते। इन्द्रस्यच सहस्राक्षत्वं प्रख्यातमिति चेदुच्यते श्लोकस्योत्तरार्द्धेन-गुप्तम् = नलरूपधारणार्थमेव तिरोधापितम् अतिशयम् = अद्भुतम् = एतदीयम् = इन्द्रसम्बन्धि, बहुनेत्रम् = बहुनेत्रत्वम् अत्र युवादित्वादण् प्रत्ययः नालोकसे = नहि पश्यसि त्वम् मानुषीत्वात् किन्तु अहं तु वोद्मि इति भावः। नलपक्षे तु श्लोकस्यास्य निम्ननांकितोऽर्थः –समितिं भूभृतः = राज्ञः जिष्णुम् = जेतारम्, अपव्यपायम् = अपगतः व्यपायः = रणात् पलायन रूपः अपायो यस्याऽसौ तम् = अपव्यपायम्, संग्रामभूमेः पलायनरहितम् अमुम् = वीरं नलम् त्वम् = दमयन्ती, कथञ्चिदपि = केनापि प्रकारेण, अमघवन्तम् = पापसमन्वितम् पापिनमिति यावत् न जानीहि = नहि अवेहि, नलकथायाः पुण्यमयत्वात्, स्वसेविनाम् पापप्रक्षालिनीत्वाच्च। गुप्तम् = रंहितम्, अक्षतम् इति यावत्। बहुनेत्रम् = बहूनां नेता तस्य भावस्तम् = बहुनेत्रम्, राजाधिराजत्वम् त्वम् नालोकसे किमिति काकुः।

**समासः** –अपव्यपायम् = अविद्यमानं पवेः अपायं यस्याऽसौ तम् = अपव्यपायम्। घटप्रतिभटस्तनि = घटस्य प्रतिभटौ स्तनौ यस्यास्तथाभूता तस्सम्बुद्धै = घटप्रतिभटस्तनि।

**कोशः** – पविः = कुलिशं भिदुरं पविः इत्यमरः।

**छन्दोलङ्कारादिकम्** – 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र वसन्ततिलकावृत्तम्। श्लेषालङ्कारश्च।

**श्लोक ५६– लेखानितम्बिनि ! --------------- मुदमुद्वहस्व।।**

**सन्दर्भादिकम्** –अयं श्लोकः महाकविना श्रीहर्षेण प्रणीतस्य नैषधीय चरितस्य महाकाव्यस्य त्रयोदशात् सर्गात् उद्धृतो वर्त्तते। दमयन्त्याः स्वयम्बरसभायां समागतानां सर्वेषां राज्ञां परिचयमुपस्थपयन्ती भगवती सरस्वती अस्मिञ्छ्लोके श्लेषेण इन्द्रनलयोः वैशिष्ट्यं वर्णयति नलरूपधरस्येन्द्रस्य वर्णनप्रसङ्गेन।

**अन्वयः** –नितम्बिनि! बलादिसमृद्धराज्यप्राज्योपभोगपिशुनाः लेखाः एतस्य पाणिचरणं सरागम् दधते, अनेन हरिणा पत्या सार्द्धंशचीव मुदमुद्वहस्व।

नलपक्षेतु–सरागम् एतस्य पाणिचरणं बलादिराज्य प्राज्योपभोग पिशुना लेखाः दधते तदनेन पत्या सार्द्धं हारिणा शचीव मुदमुद्वहस्व।

**व्याख्या**– हे नितम्बिनि = प्रशस्तनितम्बवति, अत्र प्रशंसायामिनिः, बलादिसमृद्धराज्यप्राज्योपभोगपिशुनाः = बलादीनाम् एतन्नामकानामसुरणाम् यानि समृद्धानि = समृद्धिं गतानि यानि राज्यानि = साम्राज्याणि, तेषां प्राज्योपभोगस्य = प्रभूतसुखानुभवस्य, पिशुनाः = खलाः द्वेषकर्तार इति भावः, लेख्याः = देवाः एतस्य = वीरस्येन्द्रस्येति यावत् ,पाणिचरणम् = करपादौ, प्राण्यङ्ग.त्वाद् एकवदभावः। सरागम् = रागेण सहितम् सानुरागमित्यर्थः। दधते = शिरोभिः धारणं कुर्वन्ति। तत् = तस्मात्, अनेन = एतेन, हरिणा = देवेन्द्रेण पत्या सार्द्धम् = साकम्, शचीव = पुलामजा सदृशम्, मुदमुद्वहस्य = आनन्दानुभवं कुरु। शच्याः सपत्नीभवेति यावत्।

नलपक्षेतु - सरागम् = आताभ्रम्, एतस्य = वीरस्य, नलस्येति भ्नावः, पाणिचरणम् कर्तृ, बलादीनि राज्याङ्ग.ानि तैः समृद्धस्य राज्यस्य यः प्राज्योपभोगः तस्य पिशुनाः = सूचकाः लेखाः = चक्रध्वजादेरेखा, दधते = धारयति। तदनेनवीरेण = पत्या सार्द्धम् = साकम् हरिणा = इन्द्रेण शचीव = पुलोमजेव मुदमुद्वहस्व = आनन्दानुभवं कुरु त्वभितिशेषः।

**समासः** –बलादिसमृद्धराज्यप्राज्योपभोगपिशुनाः –बलादिनां यानि समृद्धानि राज्यानि तेषां प्राज्योपभोगस्य पिशुनाः। बलादिसमृद्धराज्य प्राज्योभोगपिशुनाः। अथवा बलादीनि यानि राज्याङ्गानि तैः समृद्धस्य राज्यस्य यः प्राज्योपभोगः तस्य पिशुनाः = बलादिसमृद्धराज्य प्रज्योपभोगपिशुनाः। पाणिचरणम् = पाणिश्च चरणः च पाणिचरणम् प्राण्यङ्ग.त्वादेकवद्भावः।

**कोशः**– लेखः = लेखो लेख्ये दैवते च। इति हैम।

**राज्याङ्गानि** - स्वाम्यामात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। राज्याङ्गानिप्रकृतयः। इत्यमरः। **रागः** –रागःस्याल्लोहितादिषु। गान्धारादौक्लेशादिके अनुरागे मत्सरे

नृपे। इति हैमः।

**छन्दोलङ्कारादिकम्** –'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेणात्र श्लोके वसन्ततिलकावृत्तम्। श्लेषालङ्कारश्च।

**श्लोकः –एषः प्रतापनिधिरूद्‌गतिभाव -------- भास्वररूपसम्पत्।**

**सन्दर्भादिकम्**– महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितमहाकाव्यस्य त्रयोदशात् सर्गात् गृहीतेऽस्मिञ्छ्लोके: दमयन्त्याः स्वयम्वरसभायां समागतानां सर्वेषां राज्ञां परिचयोपस्थापनप्रसङ्गे.न नलरूपधरस्याग्नेः वर्णनं सरस्वती तेनप्रकारेण करोति येन नलाग्न्योरूभयोरेव बोधः सम्पद्येत श्लेषस्य भंग्या। अत्र प्रयुक्तानि सर्वाणि विशेषणानि अग्नि नलयोरूभयोरेवान्वितानि भवन्ति।

**अन्वयः** –एषः प्रतापनिधिः सदा उद्‌गातिमान् अनेन धनञ्जयेन किं नाम न अर्जितम्? अमुष्मात् शुचेः प्रभूतं हेम अधिगच्छ, अमुष्मात् कस्यचन भास्वररूपसम्पत् नास्त्येव।

**व्याख्या** –एषः = वीरः प्रतापनिधिः = प्रतापस्य = तेजसः निधिः = आकरः अयम् = वीरः सदा = सर्वदा, उद्‌गतिमान् = ऊर्ध्वगतिमान् अथवा ऊर्ध्वज्वलनशीलः। अनेन = अग्निना, कारणेन, धनञ्जयेन धनानि विचित्राणि तथा श्रुतिः–होतारंरत्नधातमम् इति।

.वसूनि जयतीति = धनञ्जयः अर्जुनेन, कर्त्रा किनाम = किं किल, न = नहि, अर्जितम् = समुपलब्धम्। खाण्डववने अग्ने रक्षां कृत्वाऽर्जुनः गाण्डीवं धनुः तुणीरमक्षयम्, रथञ्चाग्नेः सकाशाल्लब्धवान् इति महाभारते प्रसिद्धम्। अथवा अनेन = एतेन, धनञ्जयेन = बह्निना, किंनाम = कृपीटयोनिर्ज्वलनः' इत्यादिकाम् कां कां न संज्ञां अर्जितवान् = लब्धवान्। अमुष्मात् = एतस्मात् वनशुचेः = बह्नेः, प्रभूतम् = विपुलम् उद्‌भूत 'अग्नेरपत्यं सुवर्णम् इति स्मरणात् हेम = सुवर्णम्, अधिगच्छ, एनं पति कृत्वा। अमुष्मात् = अग्नेः कस्यचन = कस्याप्यन्यस्य पुरुषस्य भास्वररूपसम्पत् = भास्वररूपस्य = प्रकाशकरूपस्य सम्पत् = समृद्धिः, नास्त्येव = नह्येव वर्त्तते। नलपक्षे तु –एषः = अयम् प्रतापनिधिः = प्रतापस्य = कोषदण्डजतेजोविशेषस्य, निधिः = आकरः अयम् = राजा नलः, सदा = सर्वदा, उद्‌गतिमान् = उदयमान् नित्यमभ्युदयशीलः अनेन = राज्ञा, जयेन = साधनेन, किं नाम धनं नार्जितम् = नहि सम्प्राप्तम्। स्वविजयेनैव सम्पादितम् इति भावः। शुचेः = पवित्रात्, अमुष्मात् = नलात् प्रभूतम् = विपुलम् हेम

= सुवर्णम्, अधिगच्छ = अवाप्नुहि, एनं पतिरूपेण वरणं कृत्वा आद्या भव इत्यर्थः। भास्वररूपसम्पत् = भाः = कान्तिः, स्वरः = कण्ठध्वनिः, रूपम् = सौन्दर्यं एतेषाम् सम्पत् = समृद्धिः, अमुष्मात् = नलात्, कस्यचन = अन्यस्य कस्यापि, नास्त्येव।

**समासः** –प्रतापनिधिः = प्रतापस्य निधिः = प्रतापनिधिः। उद्गतिमान् = उत् चासौ गतिः = उद्गतिः उद्गतिर्यस्याऽसौ = उद्गतिमान्। धनञ्जयेन = धनम् जयतीति = धनञ्जयः तेन = धनञ्जयेन। भास्वररूपसम्पत्। अथवा भाश्च स्वरश्च रूपञ्च = भास्वररूपाणि तेषां सम्पत् = भास्वररूपसम्पत्।

**कोशः** –धनञ्जयः = धनञ्जयः सर्पभेदे ककुभे देहमारूते। पार्थेऽग्नौ इति मेदिनी। शुचिः शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वाषोडशुद्धमन्त्रिणि इति मेदिनी। प्रातपः – स प्रतापः प्रभावश्च यत्तेजनः कोषदण्डजम्। इत्यमरः।

**छन्दोलङ्कारादिकम्** –'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् अत्र वसन्ततिलकावृत्तम्। श्लेषश्चात्रालङ्कारः।

**श्लोक ५७–एतन्मुखाविवुधसंसदसावशेषा --------- ध्रियतेकरश्रीः।।**

**सन्दर्भादिकम्** –महाकविना श्रीहर्षेण प्रणीतस्य नैषधीयचरितस्य महाकाव्यस्य त्रयोदशात् सर्गात् परिगृहीतेऽस्मिञ्छ्लोके महाकविर्वर्णयति यत् दमयन्त्याः स्वयम्बरसभायाम् समागतानां समेषां राज्ञां वर्णनं कर्तुम् भगवतो विष्णोरादेशात् भगवती सरस्वती बालारूपेणाऽवतीर्य राज्ञां वर्णनं कुर्वन्ती सती नलरूपधरस्याग्नेः वर्णनं श्लेषेण कुर्वन्ती तथाविधानां विशेषणानां प्रयोगमकार्षीत् यानि विशेषणानि अग्नौ नले च समानरूपेणान्वितानि भवन्ति।

**अन्वयः** –पितृमुखि! अशेषा असौ विवुधसंसद्द एतन्मुखा, यमतोऽपि महेन्द्रतोऽपि अस्य माध्यस्थ्यम्, एनं महस्विनम् उपेहि सदारूणा, येन अमुना उच्चैः करश्रीः ध्रियते।

**व्याख्या**–पितृमुखि = पितुः मुखमिव मुखं यस्याः सा पितृमुखी = पितुर्मुखवन्मुखवती तत्सम्बद्धौ = पितुमुखि दमयन्त्या इदं सम्बोधनं तस्याः धन्यत्वप्रकाशनाय। तथा च सामुद्रिकं वचनम्–'धन्यापितृमुखीकन्या धन्यो मातृमुखः सुतः।' इति। अशेषा = सम्पूर्णा असौ = एषा विवुधसंसद् = विबुधानाम् = देवानाम्, संसद् = सभा, एतन्मुखा = एषः अयमग्निरेवमुखम् = आस्यं यस्याः सा = अग्निमुखा इत्यर्थः। देवानामग्निमुखत्वं श्रुतिरप्याह–'अग्निमुखा वै देवाः।' इति। अभिधानमपि 'बर्हिर्मुखाः क्रतुभुजः' इत्यादिकम् तथैव।

यमतोऽपि यमादपि, महेन्द्रतोऽपि = इन्द्रादपि अस्य = अग्नेः, माध्यस्थ्यम् = मध्ये विद्यमानत्वम्, इन्द्रस्य दिशा प्राची यमस्य च दक्षिणा। अग्निस्तयोरूभयोर्मध्ये विद्यमानायाः अग्निकोणाभिधानवत्याः अधीशः इति प्रसिद्धिः एनम् = अग्निम्, महस्विनम् = तेजस्विनम्, उपैहि = पतिरूपेण त्वम् आप्नुहि। सदारुणा = दारुसहितेन, येनामुना = अग्निना, उच्चैः = महती, करश्रीः = अंशु सम्पत् ध्रियते = धार्यते।

नलपक्षे तु-अशेषा = सम्पूर्णा, असौ = इयं, विबुधसंसद् = विवुधानाम् = विदुषाम्, संसद् = सभा, एतन्मुखा = एतत् प्रधाना, अस्य = नलस्य, यमतः अपि = यमादपि, महेन्द्रतोऽपि = इन्द्रादपि, माध्यस्थ्यम् = औदासिन्यम्, शत्रुमित्रयोः समानदण्डदानादपक्षपातित्वेन समदर्शित्वमिति भावः। महस्विनम् = तेजस्विनम् एनम् = नलम्, उपैहि = भर्तृरूपेण वरणं कुरु। सदा = सर्वदा, येनाऽमुना = नलेन, अरुणा अरुणवर्णा, उच्चैः करश्रीः इत्यमरः।

**समासः** -एतन्मुखा = एष एव मुखं यस्याः सा एतन्मुखा। विवुधसंसद् = विवुधानां संसद् = विबुधसंसद्। पितृमुखे! = पितुर्मुखमिव मुखं यस्याः तत्सम्बुद्धौ = पितृमुखि!

**कोशः - विवुधः** = विवुधः पण्डिते सुरे। इति हैमः। मुखम्- मुखमुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः। इति हैमः। महः- महस्तूत्सवतेजसोः। इत्यमरः। करः -बलिहस्तांशवः कराः। इत्यमरः।

यमः -कृतान्तो यमुनाभ्राता शमनो यमराड् यमः। इत्यमरः।

**छन्दोलङ्कारादिकम्** -'उक्ता वसन्ततिलका तभजा जगौ गः।' इति लक्षणानुसारेणात्र वसन्ततिलका वृत्तम्। श्लेषश्चालङ्कारः।

**श्लोक ५८- नैवाल्पमेधसि पटो ------------ विरोधिनाऽयम्।।**

**सन्दर्भादिकम्** -महाकविना श्रीहर्षेण कृतस्य नैषधीयचरितमहाकाव्यस्य त्रयोदशात् सर्गात् परिगृहीतेऽस्मिञ्छ्लोके महाकवि वर्णयति यत् दमयन्त्याः, स्वम्बरसभायां समुपस्थितानां सर्वेषां यथायथं वर्णनं कृतं भगवतो विष्णोरादेशात् वागधिष्ठातृदेवता स्वयमेव बालारूपेणावतीर्य, राज्ञां दमयन्त्याः समक्षं वर्णनं कुर्वन्ती नलरूपधरस्य इन्द्रयमयोर्मध्येसमुपविष्टस्याग्नेः वर्णनम् श्लेषेण करोति। अस्य श्लोकस्य सर्वाणि विशेषणानि तथाविधानि सन्ति यानि अग्निनलयोः समानरूपेण अन्वितानि भवन्ति।

**अन्वयः** -पटो अस्य एधसि रूचिमत्त्वम् अल्पं नैव मध्येसमित् निवसतः

अस्य तृणानि रिपवः किम्? उत्थानवान् तरस्वी अयम् पुनः विरोधिना केन अम्बुना। इत्यग्निपक्षेऽन्वयः। नलपक्षे तु-पटोः अस्य अल्पमेधसि रूचिमत्वं नैव, मध्ये समित् निवसतः अस्य रिपवः तृणानि उत्थानवान् तरस्वी अयं पुनः केन विरोधिना?

**व्याख्या-** पटोः = दाहकर्मसमर्थस्य, अस्य = वीरस्य, अग्नेः, एधसि = इन्धने, रूचिमत्त्वम् = दाहाभिलाषित्वम्, अथवा दीप्तिशालित्वं, अल्पं नैव = अनल्पमेवेत्यर्थः। समिधाम् = कष्ठानां मध्ये = मध्येसमित् 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः, निवसतः = निवासं कुर्वतः अस्येतिशेषः तृणानि रिपवः = शत्रवः किम्? इति काकुः। काष्ठानि दहतः अस्य तृणानि नगण्यनीत्यर्थः, उत्थानवान् = उद्ध्र्वगतिमान् तरस्वी = वेगवान्, अयम् अग्निः पुनरिह = सृष्टौ विरोधिना केन अम्बुना = पराभवितुं शक्यो भवति किम्? इति काकुः नैव शक्य इत्यर्थः। दिव्यस्य अस्य अनिर्वाणत्वादितिभावः।

नलपक्षेतु -पटोः अति प्रगल्भस्य वाग्मिन· इत्यर्थः। अस्य नलस्य अल्पमेधसि = मन्दप्रज्ञे 'नित्यमसिच् प्रजामेधयोः' इत्यत्र नित्यग्रहणसामर्थ्यात्, मन्दाल्पाभ्याञ्च मेधायाः इति वृत्तिकारवचनाच्च नामादिभ्योन्यत्राप्यसिच् प्रत्ययः रूचिमत्वम् = आदरः नैव, मध्येसमित् = युद्धमध्ये निवसतः = निवासं कुर्वतः, अस्य = नलस्य रिपवः = शत्रवः तृणानि = तृणवन्नगण्याः इत्यर्थः। उत्थानवान् = पौरूषसम्पन्नः उद्यम शीलो वा, तरस्वी = शूरः, अयं पुनः केन विरोधिना पराभवितुं योग्यो भवति। न केनापीत्यर्थः।

**समासः** -अल्पमेधसि = अल्पा मेधाः यस्यासौ तथाविधे। मध्ये समित् = समितः मध्ये मध्येसमित्।

**कोशः** -उत्थानम्-उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे। इति मेदिनी। तरस्वी-वेगि शूरौ तरस्विनौ। इत्यमरः। समिति- सामत्याजिसमद्युधः।

**छन्दोलङ्कारादिकम्-** 'ज्ञेया वसन्ततिलका तभजा जगौ गः' इति लक्षणानुसारेण अत्र वसन्ततिलकावृत्तम्, श्लेषालङ्कारश्च।।

।। **सम्पूर्णमिदं नैषधीयच**।।



| | | |
|---|---|---|
| १ | निरुक्त-रहस्यम् । डॉ. शिवप्रसाद द्विवेदी | |
| ६ | नैषधीयचरित-रहस्यम् । डॉ. रमाशंकर मिश्र । १-५ सर्ग | २५-०० |
| ७ | नैषधीयचरित । डॉ. शिवप्रसाद द्विवेदी । १०-१३ सर्ग | ३०-०० |
| ८ | न्यायसिद्धान्तमुक्तावली-शब्दखण्डः । डॉ. अशोकचन्द्र गौड़ शास्त्री | ५-०० |
| ९ | परमलघुमञ्जूषा-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | १५-०० |
| ० | परिभाषेन्दुशेखर-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | १५-०० |
| १ | पाणिनीयशिक्षा-सोपानम् । डॉ. बालगोविन्द झा | ५-०० |
| २ | प्रतापविजय-दीपिका । डॉ. शिवप्रसाद द्विवेदी | १०-०० |
| ३ | प्रतिमानाटक-रहस्यम् । डॉ. रमाशंकर त्रिपाठी | २०-०० |
| ४ | प्रबन्धसङ्ग्रहः । व्याकरणाचार्य निबन्ध । डॉ. ब्रह्मानन्द त्रिपाठी | १०-०० |
| ५ | प्रसन्नराघवन-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | १०-०० |
| ६ | भट्टिकाव्य-दर्पणः । स्वामी प्रज्ञान भिक्षु । १-४ सर्ग १५-००, ५-८ सर्ग | १५-०० |
| ७ | भट्टिकाव्यालोकः । डॉ. रमाशङ्कर मिश्र । १४-१७ सर्ग १५-००, १८-२२ सर्ग | १५-०० |
| ८ | भारतीयसंस्कृति-सोपानम् । आचार्य शिवप्रसाद द्विवेदी | १२-५० |
| ९ | भूषणसार-दीपिका । ( वैयाकरण-भूषणसार प्रश्नोत्तरी ) रामकिशोर त्रिपाठी | १५-०० |
| ० | मध्यसिद्धान्तकौमुदी-चन्द्रिका । आचार्य विजयमित्रशास्त्री सम्पूर्ण | ६०-०० |
| | प्रथम खण्ड २५-००, द्वितीय २०-००, तृतीय २०-००, चतुर्थ | १५-०० |
| १ | मनोरमा-रत्नविमर्शः । केशवदेव तिवारी । प्रथम भाग ७-५०, द्वितीय भाग | १५-०० |
| २ | महाकविकालिदासः । ( विशिष्टाध्ययनम् ) । डॉ. शिवप्रसाद द्विवेदी | २५-०० |
| ३ | महाभाष्यम्नवाह्निकीयालोचनम् । नवाह्निक-प्रश्नोत्तरी ) । विजयमित्र शास्त्री | २५-०० |
| ४ | मालविकाग्निमित्र-रहस्यम् । बालगोविन्द झा | १५-०० |
| ५ | मीमांसापरिभाषा सोपानम् । डॉ. शिवप्रसाद द्विवेदी | ७-५० |
| ६ | मुक्तावली-प्रकाशः (न्यायसिद्धान्तमुक्तावली-प्रश्नो.) राजेन्द्रप्रसाद कोठ्यारी | २०-०० |
| ७ | मुद्राराक्षस-विवेकः । लोकमणि दाहाल | २५-०० |
| ८ | मृच्छकटिक-सोपानम् । डॉ. नरेश झा | २०-०० |
| ९ | मेघदूत-तत्त्वालोकः । अशोकचन्द्र गौड़ शास्त्री | १५-०० |
| | यतीन्द्रमतदीपिका-सोपानम् । आचार्य शिवप्रसाद द्विवेदी | ५-०० |
| | रघुवंश-रहस्यम् । रामप्रसाद त्रिपाठी । १-३ १२-५० ६-७ १२-५०, १३-१४ | १२-५० |
| | रत्नावलीनाटिका सोपानम् । डॉ. शिवप्रसाद द्विवेदी | १५-०० |
| | रसगङ्गाधर-सारः । डॉ. नरेश झा | २०-०० |
| | रसगंगाधर-हृदयम् । ज्ञानचन्द्र त्यागी | ३०-०० |
| | रामविलाप-काव्यसोपानम् । डॉ. शिवप्रसाद द्विवेदी | १५-०० |
| | लघुमञ्जूषा-रहस्यम् । स्वामी रामेश्वर पुरी | १५-०० |
| | लघुशब्देन्दुशेखर-सोपानम् । डॉ. शिवप्रसाद द्विवेदी | २५-०० |
| | लघुसिद्धान्तकौमुदी-चन्द्रिका । आचार्य विजयमित्र शास्त्री | ४०-०० |
| | वक्रोक्तिजीवित-दीपिका । डॉ. नरेश झा | १२-५० |
| | वाक्यपदीय-प्रकाशिका । ( ब्रह्मकाण्ड ) । डॉ. सुरेशचन्द्र शर्मा | १५-०० |
| | वासवदत्ता-रहस्यम् । डॉ. शिवप्रसाद द्विवेदी | १०-०० |

७२ विक्रमाङ्कदेवचरित-रहस्यम् । डॉ॰ अशोकचन्द्र गौड़ शास्त्री ७-५०
७३ विक्रमोर्वशीय-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी १२-५०
७४ विश्वगुणादर्शचम्पू-रहस्यम् । डॉ॰ शिवप्रसाद द्विवेदी १५-००
७५ वेणीसंहार-रहस्यम् । पं॰ परमेश्वरदीन पाण्डेय १५-००
७६ वेदान्तपरिभाषा-सौरभम् । आचार्य शिवप्रसाद द्विवेदी ५-००
७७ वेदान्तसार-प्रदीपः । श्रीराजेन्द्रप्रसाद कोठ्यारी १५-००
७८ वैदिकसाहित्येतिहास-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी १५-००
७९ वैयाकरणभूषणसार-दीपिका । श्रीरामकिशोर त्रिपाठी १५-००
८० वैयाकरणसिद्धान्तकौमुदी-चन्द्रिका । आचार्य विजयमित्र शास्त्री । प्रथमखण्ड [illegible]-००
तृतीय खण्ड ३०-००
८१ वैयाकरणसिद्धान्तकौमुदी दीपिका । श्रीरामकिशोर त्रिपाठी । द्वितीयखण्ड २५-००
चतुर्थखण्ड २५-००
८२ वैयाकरणसिद्धान्तलघुमञ्जूषा-रहस्यम् । स्वामी रामेश्वर पुरी १५-००
८३ वृत्तरत्नाकर-दीपिका । पं॰ वेदव्यास शुक्ल १५-००
८४ व्यक्तिविवेकविमर्शः । प्रथम विमर्श । श्रीराजेन्द्रप्रसाद कोठ्यारी १२-५०
८५ व्यक्तिविवेकविमर्श । द्वितीय विमर्श । डॉ॰ शिवप्रसाद द्विवेदी १२-५०
८६ व्याकरणशास्त्रस्येतिहासः । डॉ॰ ब्रह्मानन्द त्रिपाठी २०-००
८७ शाकुन्तल-रहस्यम् । त्रिलोकीनाथ द्विवेदी ३०-००
८८ शिवराजविजय-दीपिका । पं॰ वेदव्यास शुक्ल । प्रथम विराम ३०-००
८९ शिशुपालवध-रहस्यम् । श्री अशोकचन्द्र गौड शास्त्री । १-४ सर्ग ३०-००
९० शिशुपालवध-रहस्यम् । डॉ॰ शिवप्रसाद द्विवेदी । एकादशः सर्गः १५-००
९१ सत्यहरिश्चन्द्रोदय-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी १७-५०
९२ संस्कृतभाषाविज्ञानम् । डॉ॰ शिवप्रसाद द्विवेदी १५-००
९३ संस्कृतसाहित्येतिहास-कुञ्जिका । आचार्य परमानन्द शास्त्री १२-५०
९४ सांख्यकारिकादर्शः । राजेन्द्रप्रसाद कोठ्यारी १५-००
९५ सार-सिद्धान्तकौमुदी एवं अमरकोश-रहस्यम् । डॉ॰ शिवप्रसाद द्विवेदी
प्रथम खण्ड १५-००, द्वितीय खण्ड १५-००, तृतीय खण्ड १५-००, चतुर्थ खण्ड १५-००
९६ साहित्यदर्पणालोकः । रामजी लाल शर्मा । १-६ परि. १७-५०, ७-१० परि. १२-५०
९७ साहित्यशास्त्रीयोनिबन्धेतिहासः । वेदव्यास शुक्ल २५-००
९८ साहित्याचार्य सफलता सोपानम् । ( पंचमपत्र ) कामेश्वर सिंहदरभंगा वि॰ वि॰
९९ सिन्धुवादवृत्त-रहस्यम् । डॉ॰ कृष्णदेव प्रसाद २५-००
१०० स्वप्नवासवदत्त-रहस्यम् । डॉ॰ कृष्णदेव प्रसाद १५-००
१०१ स्वरवैदिकी-प्रकाशः । डॉ॰ बालगोविन्द झा २५-००
१०२ हर्षचरित-सोपानम् । ( १-४ उच्छ्वास ) । डॉ॰ शिवप्रसाद द्विवेदी १५-००
१०३ हरविजय-रहस्यम् । प्रथमसर्ग । डॉ॰ शिवप्रसाद द्विवेदी १५-००
१०४ हरिश्चन्द्रोपाख्यान-रहस्यम् । डॉ॰ शिवप्रसाद द्विवेदी १०-००
१०५ ऋक्सूक्त-सन्दर्शिका । डॉ॰ बाल गोविन्द झा यंत्रस्थ